# श्रीगुरुगोविन्दसिंह-भगवत्-पाद-जीवनेतिवृत्तम्

आङ्ग्ल-भाषायां मूल-ग्रन्थकारः

**हरबंससिंहः**

प्रस्तोता, पंजाबी-विश्वविद्यालयः, पटियाला

तस्य अयं संस्कृत-भाषया अनुवादः

अनुवादकः

**श्रुतिकान्त शर्मा**

श्री 'गुरुगोविन्दसिंह-फ़ाउन्डेशन्'

चंडीगढ़

हरवंससिंह-प्रणीतस्य आङ्ग्ल्-भाषा-निबद्धस्य
'गुरुगोविन्दसिंहस्य' संस्कृत-भाषया अनुवादः

प्रथमं संस्करणम् : १९६६ ख्री.

भारते होश्यारपुरे वि. वै. शो. सं. मुद्रण-यन्त्रा-ऽऽलये
शास्त्रिणा देवदत्तेन ग्रन्थो मुद्रापितो ह्ययम् ।

३१—ऐम्. ऐल्. ए.—फ्लैट्स्, चंडीगढ़तः
श्री 'गुरुगोविन्दसिंह-फ़ाउन्डेशन्'
इत्याख्यया सभया प्रकाशितः

एष माहम्मदीयोऽसौ,
हिन्दुरिति भिदा मृषा।
एकस्य लोक-नाथस्य,
प्रजाः सर्वे हि मानवाः॥

स्रष्टा धर्त्ता विधर्त्ता च,
तेषां पालयिता च सः।
तस्मान् मनुजमात्रस्य,
समानत्वं सुनिश्चितम्॥

न हि नमाज़तो भिन्ने,
सन्ध्या-पूजे कथञ्चन।
मन्दिरं च न मस्जितो,
भिद्यते ज्ञानिनां मते।
विश्वेषां हि मनुष्याणाम्,
एवमेकत्वमीक्ष्यताम्॥

—श्रीगुरुगोविन्दसिंह-भगवत्-पादाः।

# प्राक्-कथनम्

## (FOREWORD)

अद्भुत-कर्मकृतो नायक-पुरुषस्य चरितानि प्रायेण विशिष्टो-द्देश्यकानि, किन्तु दुरवगाहानि, भवन्ति। तस्मात् तदनुशीलिनां विमर्श-निष्कर्षा अपि नैक-विधाः। तेन च तथा-विध-पुरुषस्य जीवनेतिवृत्त-कथा यथा स्वैरं विविध-विधाभिः वर्णयितुं शक्यते, न तथा कश्चिद् अन्यो विषयः। एवं-गते, यदि कश्चिद् जीवनेतिवृत्तकारः स्व-रचना-नायक-चरितं स्वेच्छया विपरिणमयति, माध्यस्थ्यं च विमुच्य पक्ष-विशेषे पतति, तदा किमु आश्चर्यम्! एषा दशा प्रायशः कारण-द्वयाद् भवति। तत्र, उपादान-हेतु-भूतायाः ऐतिह्य-सामग्र्याः दारिद्र्यम्, एकं कारणम्। नायक-विशेषस्य जीवन-काले सामाजिक-धार्मिक-राजनयिका-ऽऽद्याः याः आचार-विचार-सरण्यः अभूवन्, सम-वेदना-बलेन तासां सम्यक्-प्रतिपत्तौ अशक्तिः, द्वितीयम्। वस्तु-तत्त्वे, उत्तम-विधं जीवनेतिवृत्तं न काव्यम्, न च इतिहासः। तद् हि एतयोः उभयोः अन्तराले स्थिता, अन्या एव, साहित्य-विधा। 'जीवनेतिवृत्त'-सञ्ज्ञया निरूढिम् आगताः कतिचित् कृतयः, पुनः, नायक-विशेषस्य जीवन-सम्बन्धिनीनां कथानां तिथ्यादीनां च सङ्ग्रहमात्राणि, नाना-कथानां मिथः सन्तोलनेन सम्पादितानि 'समीक्षित'-सङ्ग्रहमात्राणि वा, दृश्यन्ते। न ताः कृतयः साहित्य-विधात्वेन गणयितुम् उचिताः। साहित्य-सौन्दर्या-ऽनुभूति-संस्कारैः अनुप-रक्तायाः प्रतिभायाः प्रसूताः कृतयः साहित्य-गुणैः अनुपस्कृताः

खलु भवन्ति। 'श्रीगुरुगोविन्दसिंहं कथा-प्रबन्ध-पुरुषतया उपादाय प्रणीतानां जीवनेतिवृत्त-ग्रन्थानाम् अपि विषये पूर्वोक्तम् इदं मतं न व्यभिचरति।' इति पश्यतः कस्य सचेतसः चेतो न उद्विजते। इत्थं-गते, 'गुरुगोविन्दसिंह-फाउन्डेशन्' (श्री-'गुरुगोविन्दसिंह-न्यास्तु')-नाम-संस्थाया अङ्ग-भूतया प्रकाशन-समित्या अतीव यथा-कालं सङ्कल्पितं यत् 'श्रीगुरुगोविन्दसिंहस्य तृतीय-जन्मशताब्द्याः वत्सरे लोकंपृणम्, किन्तु प्रामाणिकम्, आङ्ग्ल-भाषा-निबद्धं श्रीगुरु-जीवनेतिवृत्तं प्राकाश्यम् आनीयेत।' इति। एतादृशं हि जीवनेतिवृत्तं वस्तुतः चिराद् अपेक्षणीयम् अवर्त्तिष्ट। श्रीगुरुगोविन्दसिंहस्य पुण्यां स्मृतिम् उद्दिश्य प्रतिष्ठाम् आगतस्य 'गुरुगोविन्दसिंह-फाउन्डेशन्' (श्री-'गुरुगोविन्दसिंह-न्यास्तु')-नाम-संस्थाया अङ्ग-भूतायाः पूर्वोक्त-समित्याः प्रथमः धर्मः खलु एष आसीद् यत् श्रीगुरुगोविन्दसिंहस्य पूर्वोक्त-विध-जीवनेतिवृत्तस्य प्रकाशनम्। इदं विदधत्या तया समित्या स्व-धर्मः पालितः।

पूर्वोक्त-समित्या प्राकाश्यम् आनीयमाने अस्मिन् जीवनेतिवृत्ते नायकस्य चरित-कथाः गुण-कर्माणि च ग्रन्थकारः, अन्तःकरणं श्रद्धा-भक्तिभ्यां विपूतं सरसं च विधाय, सर्वात्मना चेतसः स्वास्थ्यम् आधाय, वर्ण्या-ऽर्थान् च न्याय-तुलाम् आरोप्य, याथार्थ्येन उपनिबध्नाति। न हि अत्र इतिहासः सिद्धान्तविशेषस्य मत-विशेषस्य वा सम्पोषणाय कुञ्जी-कृतः। श्रीगुरुगोविन्दसिंह-जीवनेतिवृत्त-विषये, तदानीन्तनीः धार्मिक-राजनयिका-ऽऽद्याः अवस्थाः मनसि निधाय, विहितानाम् आधुनिका-ऽनुसन्धानानां

फलानि, पारोवर्य-विदां मतानि, धर्मग्रन्थेषु प्रतिपादितान् अर्थान् च यथा-न्यायम् उपजीव्य ग्रन्थः एष प्राणायि। एवम्, मन्ये, स्व-जातौ प्रथमा खलु एषा कृतिः। 'सन्दर्भोऽयं प्रायेण सर्वासु प्रधानासु भारतीय-भाषासु, अनुवाद-रूपेण, प्राकाश्यं गमिष्यति। इति कृत्वा अतीव लोक-प्रियः लोक-ग्राह्यश् च भविता।' इति विश्वसिमि।

यथा इतिहास-विदिता अन्ये कतिपये महर्षयो न सामान्यान् धार्मिका-ऽभ्युपगमान् लोकस्य उपादिशन् तथा श्रीगुरुगोविन्दसिंहो-ऽपि। स हि निर्मलित्वम्, आत्म-सम्माननाम्, भक्तिं च लोकस्य उपदिदेश। स, च, सिक्खैः 'दशम-नानकः' इति स्मर्यते। तस्मात् न तस्य उपदेशः श्रीगुरुनानकस्य उपदेशाद् भिद्यते।

आद्य-नानकोऽब्रवीत्:—

'अशुचिषु वस्तुषु शुचयः तिष्ठत।' इति।

श्रीगुरुगोविन्दसिंहोऽपि स्व-भक्तानाम् अशिक्षयत्:—

'न निर्जनं गत्वा आत्मंभरयः भवत। प्रत्युत, लौकिक-व्यवहारेषु सर्वात्मना मग्नाः वीर-नराः भवत। युष्माकं शुचित्वम् ईश्वरस्य प्रगाढ-भक्तौ, जीवन-व्यापारेषु अत्यन्त-स्वार्थ-त्यागे, सत्य-धर्मं प्रति दृढा-ऽनुरागे च आविर्भवतु।' इति।

स हि 'खालसा' इत्याख्याताम् (अद्भुतस्य भगवतो विशुद्धा-ऽऽत्म-पुरुषाणाम्) संस्थाम् प्रतिष्ठापयामास, तत्र दीक्षितानाम् उपदेशाय च अवोचत्:—'केवले परमेश्वरे आस्थां कुरुत, न

देवान्तरे ।' इति । तेन स्वयम् एकस्मिन् पद्य-बन्धे स्व-विशुद्धाऽऽत्म-पुरुषाणाम् आस्थायाः स्वरूपं निरूप्यते । तत्र उच्यते :—

'यो न ददाति निर्वातुं ज्वलितं सत्य-दीपकम् ।
ईश्वर-ध्यान-सन्मार्गाद् यो न भ्रश्यति जातुचित् ॥

अनुरागश् च विश्वासोऽशेषो यस्य स्वयंभुवि ॥

नास्ति निष्ठोपवासेषु क्वचिद् यस्य भ्रमादपि ।
माहम्मदीय-साधूनां समाधिष्वपि नैव च ॥

यो ह्येकं सर्व-लोकेशं श्रद्धत्ते निखिला-ऽऽत्मना ।
नाऽहिंसां न तपस्यां न तीर्थयात्रां न संयमम् ॥

पूर्ण-ब्रह्म-प्रकाशश् च हृदये यस्य दीप्यते ।
तस्यैकस्यैव विज्ञेया खालसा-पद-पात्रता ॥' इति ।

श्रीगुरुगोविन्दसिंह-मतेन यो भीरुः, न स ईश्वर-भक्तः । भीरुत्वं च ईश्वर-भक्तत्वं च मिथो विरुद्धे । एतौ हि द्वौ धर्मौ सजीव-धर्मस्य सत्तां निषेधतः । स्व-भक्तान् प्रबोधयता तेन प्रतिपादितम् :—'यः अत्याचारिणाम् आततायिनां च अधीनतां याति, स न धार्मिकः । गत्यन्तराभावे आततायिना सह योधनाय खड्गस्य उद्यमनं धर्म्यम् ।' इति । तस्य मतेन कापुरुषत्वं वराकत्वं च, द्वे अपि, घोरतमे पापे, सर्वथा धर्म-प्रतिकूले च । स हि एकेन पद्येन बहुशः इदं तत्त्वम् उपदिशति स्म । स अब्रवीत् :—

'ब्रह्म-विद्या-प्रमार्जन्या मार्ज्यं क्लैब्यं हि मानसम् ।' इति ।

तस्माद् ईदृशः प्राण-धमनः उपदेशः, मन्त्र-शक्तिवत्, काय-चिकित्सां कृत्वा, क्षुद्रता-ऽभिभूतान् मानवान् 'मुनि-योधान्' व्यधात् । एतस्माद् एव कारणात् तेषां 'मुनि-योधानाम्' ईश्वर-भक्तिः,

शक्तिः, गुरु-भक्तिश् च तदुत्तर-काल-भवायाः जनतायाः लोक-प्रिय-कथा-विषयतां गता। कनिङ्घम-मते श्रीगुरुगोविन्दसिंहेन पराभूतानां नराणां सुप्ता शक्तिः, कादाचित्का-ऽऽवेश-मयी सती अपि उदात्ता सामाजिक-स्वातन्त्र्या-ऽभिकाङ्क्षा, जात्याः उन्निनीषा च उद्बोधिता। एते सामाजिक-स्वातन्त्र्या-ऽभिकाङ्क्षा, जात्याः उन्निनीषा च ते द्वे इच्छे ये श्रीगुरुनानकेन परमेश्वरस्य विशुद्ध-पूजायाः धर्मत्वेन उपदिष्टे।

श्रीगुरुगोविन्दसिंहः स्व-प्रतिभा-बलेन प्रेयश् च श्रेयश् च युगपद् ऊहाञ्चक्रे। तस्य तर्क-शास्त्रे अयुत-सिद्धे खलु एते। न भौतिक-स्थूल-द्रव्या-ऽऽश्रयं विना शक्ति-गुणः आविर्भवति। तस्मात् पदार्थानां, तदुत्पत्ति-कालाद् आरभ्य वर्त्तमाने, रूपे उपेक्षां कर्त्तुम् अशक्यम्। एवं-गते, उपदेशात्मना श्रीगुरु-दत्तायाः देग् (बृहत् पचन-पात्रम्), तेग् (कृपाणः), फ़तेह् (विजयः)' इति त्रित्याः स्वरूपं तज्जिज्ञासोः बुद्धौ तावत् सम्यग् न अवभासते यावत् तद्-विवक्षितः अर्थः पूर्ण-विस्तरेण न विविच्यते। तथाहि, 'जातीय-भोजन-शाला'-लक्षकेण देग् (पचन-पात्र)-पदेन, आर्थिक-दृशा लक्षिता-ऽर्थस्य विवक्षणाद् अनन्तरम्, अनुकम्पा-वदान्यता-त्यागिता-प्रेमा-ऽऽदयः सद्-गुणाः अपि व्यज्यन्ते। सोऽयं व्यङ्ग्योऽर्थः एव अस्य पदस्य प्रधानतया विवक्षितः अर्थः। तथा च, तेग् (कृपाण)-पदेन यथा शारीरिकी शक्तिः लक्ष्यते तथैव आचारिकं आध्यात्मिकं च बलम् अपि व्यज्यते। इदं द्विरूपं बलम् एव, अन्ते, आननायिनं विरुद्धि, पराभवति च। अथ

फ़तेह् (विजयः)। अनेन पदेन यथा लौकिक-व्यवहारेषु यत्नानां सिद्धिः लक्ष्यते तथैव जगतां परमा-ऽधीश्वरस्य शक्तौ आस्थाऽपि दृढं व्यज्यते। यतो हि, मनुष्याणां विजयाः परमेश्वरस्य विजये निमज्जन्ति। इति कृत्वा 'शेषे, परमार्थेन, परमेश्वरः एव विजयी।' इत्येव वक्तुम् उचितम्।

असंशयं सा एषा 'त्रिरत्नी' सिक्खानां बृहत्तमं रिक्थं वर्तते। वस्तुतः एषा त्रिरत्नी एव सिक्ख-सम्प्रदाय-भवनस्य आधारः विद्यते। परन्तु जातीनां राष्ट्राणां च जीवने हैमन्तिक-जाड्य-कल्प-निष्क्रियत्व-कालेषु लोकाः आत्मनः रिक्थं बहुधा उपेक्षितुं वा अनौचित्येन उपभोक्तुम् वा आरभन्ते। किन्तु अनया 'त्रिरत्न्या' प्रत्याय्यमानः नित्य-सत्या-ऽर्थः जातुचिदेव तथा विशेषेण अवधेयः अभूद् यथा अद्यत्वे अस्ति। अधुना हि भारतीयाः अन्तर्मुख-जगति आचार-बलेन हीनाः, बाह्य-जगति निर्घृण-रिपुभिः पीड्यमानाः सन्तः, आध्यात्मिक-स्वास्थ्य-जननम्, एतत्-त्रिरत्न-कल्प-सदृशं रसायनं मार्गयन्तेतमाम्। 'कारवः, वणिजः कार्यालयिनः, धर्मोपदेशकाः, सैनिकाः, सर्वे स्वकीयं पुरातनं दाय-रिक्थं व्यस्मार्षुः।' इति भाति।

रामायण-महाभारतयोः कतिचित् प्रकरणानि आश्रित्य, अभिनवया शैल्या, निबद्धे 'चौबीस-अवतार' (चतुर्विंशत्यवतारम्) इति सञ्ज्ञके स्व-काव्ये श्रीगुरुगोविन्दसिंहेन सम्यग् उपपाद्य दर्शितं यद् "'आन्तरिकाद् बाह्यात् च घातुकाद् न्यायस्य धर्मस्य च त्राणाय गत्यन्तरा-ऽभावे, अनुनय-सङ्ख्या-ऽऽदीनाम् उपायानाम् अ-फलप्रदत्वे, कृपाणस्य वाहनं सर्वथा न्याय्यम्।' इति हिन्दु-धर्मशास्त्रकाराणां समस्ता-ऽवताराणां च अभिमतम्।" इति।

साम्प्रतं प्रकाश्यमानस्य श्रीगुरुगोविन्दसिंह-जीवनेतिवृत्तस्य अनुशीलनेन ज्ञास्यते यत् 'श्रीगुरुगोविन्दसिंहेन धर्मः उज्जीवितः, तस्य बलेन च, असम्भाव्यतयाऽपि परिभावितुं शक्यम्, सुदुष्करं कर्म कृतम्।' इति। अस्य श्रीगुरुगोविन्दसिंह-जीवनेतिवृत्तस्य पाठकान् प्रति 'द रिलिज्यन्ज् आव् मैन्' (मानव-जात्याः धर्माणां कथा) इत्याख्ये स्वग्रन्थे 'हस्तन् स्मिथ'-महाशयेन यद् उक्तं तत् सर्वात्मना सत्यं भाति। स महाशयः ब्रवीति :—

"धर्मः यदा उच्छ्वसितो भवति तदा विस्मयकरीं शक्तिम् अभिव्यनक्ति; एष सर्वम् आत्मसात् करोति। यत्-किञ्चिद् अन्यद् मूक-भावम् अवलम्बितम् अवतिष्ठते तत् तस्य आश्रयतां गच्छति तस्य सेवक-पदं च निष्प्रतिरोधं स्वी-करोति।

सजीवः धर्मः यदा मनुष्यस्य सम्मुखीनः भवति तदा स मनुष्यम् इह लोके सम्भाव्यतया गुरुतमं कामचारम् अनुमन्यते; — —स मनुष्यस्य आत्मानं, तेन कर्तुं शक्यं, महत्तमं साहस-कर्म कर्तुम् आकारयति; स मनुष्यस्य पुरः प्रस्तौति 'अन्तःकरणस्य अटवीषु अधित्यकासु धन्वसु च यात्रां कुरु।' इति; स मनुष्यम् आत्मानं वशयितुं भौतिकैः भयैः अ-मिथ्या-भूतैः दुःखा-ऽऽदिभिः सह सङ्ग्रामयितुं च चोदयते। ये नरा धर्मस्य अव्यक्तम् आह्वानम् आकर्णयन्ति अनुसरन्ति च त एव जीवात्मन एकान्त-यात्रायाः समये अभिमुखी-भवन्ति सङ्कटानि कष्टानि च निशामयन्ते।

क्षुरस्य धारा निशिता दुरत्यया,  
दुर्गं पथम् तत् कवयो वदन्ति।" इति।

प्राचीन-शास्त्र-नदीष्णेन, 'निर्मल' सिक्ख-सम्प्रदाया-ऽनुयायिना साधु-गोविन्दसिंहेन हिन्दी-भाषा-निबद्धे, 'इतहास गुरु-ख़ालसा' (ख़ालसा-गुरोः इतिहासः) इति सञ्ज्ञिते, ग्रन्थकार-कीर्त्ति-स्तम्भभूते, स्व-ग्रन्थे, '[मर्यादा-पुरुषोत्तमेषु] श्रीगुरुगोविन्दसिंहस्य पदम्' नाम प्रकरणं शोभनया शैल्या उपसंहृतम्। स कथयति :—

"सहस्राणि धर्मोपदेशकाः लक्षाणि च राष्ट्र-भक्ताः शासकाः राजानश् च अभूवन्; न तु कोऽपि धर्मस्य रक्षार्थं सर्व-स्वं दत्त्वा अवसाने आत्मनो जीवितम् अपि अदात्।

सिक्ख-समाजस्य निर्माता, सिक्ख-धर्मस्य पथ-दर्शकः शास्ता च, श्रीगुरुगोविन्दसिंहो नाम केवलः स महापुरुषः य. हिन्दु-धर्मं पौनः पुन्येन आपतन्तीभ्यः विपदाभ्यः अरक्षत्, अथवा मृतप्रायायाम् आर्य-जात्यां नवम् आत्मानं प्रावेशयत्।

श्रीगुरुगोविन्दसिंह-कृतानां माङ्गलिकानाम् उपदेशानाम् अनुग्रहेण एव चत्वारः वर्णाः बन्धुत्व-सम्बन्धेन मिथः संयुज्य परस्परं व्यवहर्तुं प्रारभन्त; श्रीगुरुगोविन्दसिंहस्य एव शक्त्याः अनुग्रहेण अद्यत्वे सिक्ख-समाजः सैन्य-बले अग्रणीः गण्यते।

यावद् आर्य-जातिः ध्रियते, तावत् तस्य अनिर्वचनीयानि अवदानानि पूर्णा-ऽऽदर-सम्मानाभ्यां सह स्मरिष्यन्ते।

सौभाग्यवती सा जातिः, सौभाग्यवान् असौ कालः, सौभाग्यवत् तद् राष्ट्रम्, सौभाग्यवत् तद् नगरम्, सौभाग्यवत् तद् गृहम्, सौभाग्यवती च सा पूज्या जननी या श्रीगुरुगोविन्दसिंहम् असूत।" इति।

किरपालसिंहः
अध्यक्ष.,
प्रकाशन-समिति,
गुरुगोविन्दसिंह-फ़ाउन्डेशन्।

पटियाला
आक्तोबर ३, १९६६ ख्री०

# सौजन्य-स्वीकारः

## (ACKNOWLEDGEMENTS)

" 'गुरुगोविन्दसिंह-फ़ाउन्डेशन्' (श्री-'गुरुगोविन्दसिंह-वास्तुः') दशम-श्रीगुरुचरणानां तृतीय-जन्मशताब्द्याः वत्सरे तेषां जीवनेतिवृत्तस्य प्रकाशनस्य निश्चयं व्यवस्थां च अकार्षीत् ।" इति सर्व-प्रथमं तस्मै धन्य-वादाः वितीर्यन्ते । प्रकाशन-समित्याः अध्यक्ष-पदम् अलङ्-कुर्वताम् सरदार्-किरपालसिंह-नारंग-महाभागानां सदभिनिवेशं समाद्रियमाणः अहम् अस्य सन्दर्भस्य प्रणयने प्रवृत्तः । 'अमी महाभागाः मां विषयेऽत्र स्व-विश्वास-भाजनताम् अनयन् ।' इति तेषाम् अनुग्रहं भूयो-भूयः स्मरामि ।

श्रीगुरुगोविन्दसिंहस्य जीवनेतिवृत्त किमपि आश्चर्य-भूतम् । तस्य विरचनं न ईषत्-करं कर्म, न च भावि । विषयोऽयं महान्, अस्माकं शक्तयश् च परिमिताः । अपि च, श्रीगुरुचरणानाम् ऐहिकं जीवनं पुरु-रूपतया यथा बुद्ध्यगम्यम्, तथैव इह लोके तेषां ईश्वर-दूतत्वस्य स्वरूपम् अपि सर्जना-ऽऽकर्षण-शक्ति समाढयं सद् ज्ञाना-ऽतीतम् । तस्माद् वयं तेषां चरितस्य अन्चल-मात्रं स्प्रष्टुं यदि नाम क्षमाः, न तद् निर्ग्रहीतुम् ।

अपि च, एतज्जीवनेतिहास-सामग्री अतीव स्वल्पा । तत्र च, श्रीगुरुचरणानाम् आत्म-कथा-रूपं तत्-कृतं 'वचित्रनाटक' (विचित्र नाटकम्), तेषाम् आश्रयम् उपागतानां कवीनां मध्यतः सेनापत-

कृता 'श्रीगुरुसभा' ( श्रीगुरुसभा ), नाथमल-कृतम् 'अमरनामाः' (अमरपुरुषस्य चरितम्) अनिराय-कृतं 'जंगनामाः गुरुगोविन्दसिंह जी का' ( श्रीगुरुगोविन्दसिंह-युद्ध-वर्णनम् ) इत्येवमादि-ग्रन्थाः प्रधानतया लेख-सामग्रीं समर्पयन्ति। एतान् वर्जयित्वा ग्रन्था-ऽन्तरेभ्यः तदानीन्तनेतिहास-नाम-योग्य-लेखोपारूढा अल्पिष्ठा सामग्री हस्तम् आयाति। अस्य सन्दर्भस्य विरचने इमे सर्वे ग्रन्थाः यथा मम उपजीव्याः अभूवन्, तथैव श्रीगुरुचरण-जीवन-समयाद् इतस्त्येषु विभिन्न-कालेषु प्रणीताः वक्ष्यमाणाः ग्रन्थाः अपि उपकारकाः आसन् :—

१. (क) साखीबुक् ( जीवन-पुस्तकम् )

(ख) द ट्रैवल्ज़् आव् गुरुतेग़बहादुर ऐन्ड गुरुगोविन्दसिंह (श्रीगुरु तेग़बहादुर-गोविन्दसिंहयोः यात्राः ), सरदार् सर् अत्तरसिंह-महाभागेन आङ्ग्ल-भाषया अनूदितौ ग्रन्थौ।

२. गुरबिलास (गुरु-विलासः), सुक्खासिंह-प्रणीतः।

३. सूरजप्रकाश (सूर्य-प्रकाशः ), भाई-सन्तोखसिंह-प्रणीतः।

४. पन्थप्रकाश (पथ-प्रकाशः), 'गिआनी'-ग्यानसिंह-प्रणीतः।

५. ए स्कॅच् आव् द सिक्ख् ( सिक्खानां चरितम्), जाह्न माल्कम्-प्रणीतो ग्रन्थः।

६. ए हिस्ट्रि आव् द सिक्ख् ( सिक्खानाम् इतिहासः ), जोज़फ़् डी० कनिंघं-प्रणीत।

७. हिस्ट्रि आव् द पंजाब् ( पञ्चापस्य इतिहास. ), सय्यद्-मुहम्मद्-लतीफ़्-प्रणीतः।

८. द सिक्ख रिलिजियन (सिक्ख-धर्मः), ऐम्० ऐम्० मैकालिफ़ -प्रणीतः।

९. इवोल्यूशन आव् द ख़ालसा ( ख़ाल्सा-विकासः ), इन्दुभूषण-बनर्जी-प्रणीतः।

१०. ए शार्ट् हिस्ट्रि आव् औरंगज़ेब् ( अवरङ्गज़ेबस्य लघुः इतिहासः ), जदुनाथ-सर्कार्-प्रणीतः ।

११. टैन् मास्टर्ज़् (दश गुरवः), 'प्रोफ़ैसर्'-पूरनसिंह-प्रणीतो ग्रन्थः ।

१२. द बैटल्ज़् आव् गुरुगोविन्दसिंह ( गुरुगोविन्द-सिंहस्य युद्धानि ), सुन्दरसिंह-प्रणीतो ग्रन्थः ।

१३. द पोएट्रि आव् द दशम ग्रन्थ (दशम-ग्रन्थस्य काव्यम् ), धरमपाल-अस्था-प्रणीतो ग्रन्थः ।

१४. ए शार्ट् हिस्ट्रि आव् द सिख्स् ( सिक्खानां लघुः इतिहासः ) तेजासिंह-गंडासिंहाभ्यां प्रणीतः ।

१५. ए हिस्ट्रि आव् द सिख्स् ( सिक्खानाम् इतिहासः ), खुशवन्तसिंह-प्रणीतः ।

'अत्र उपनिबद्धं जीवनेतिवृत्तं न इतिहासाद् अपेयात् ।' इत्येतत् तत्त्वं क्षणाय अपि अविस्मरन् उपलभ्यमानेतिहास-ग्रन्थानां, परम्परा-ऽऽगतस्य ज्ञानस्य च, प्रकाशे सततं सञ्चरितवान् अस्मि ।

श्रीगुरुगोविन्दसिंह-रचना-गतानाम् अन्य-धर्मग्रन्थस्थानां च प्रकरण-विशेषाणाम् आङ्ग्ल्-भाषा-ऽनुवदने मया प्रायशः मैकालिफ्-महाशयस्य ग्रन्थ एव उपाश्रितः ।

इदं जीवनेतिवृत्तम् विशिष्टाम् इतिहासीय-विज्ञान-सराणिम् अनुसृत्य सृष्टानां सन्दर्भाणां श्रेणिं न अनुप्रविशति तस्माद् न इह पाद-टिप्पणीषु, क्वचिदन्यत्र वा, आकरी-भूत-ग्रन्थानां नामा-ऽऽदि-ग्रहः कृतः ।

पञ्चापीयेतिहास-पण्डित-प्रवरः डाक्टर्-गंडासिंह महाभागः परमौदार्येण स्व-ग्रन्था-ऽऽलयाद् ग्रन्थान् मम अदात्, अस्य मत्-सन्दर्भस्य हस्त-लिखित-रूपम् अनुशील्य च तत्र तत्र स्थलेषु अवधाना-ऽर्ह मतं प्राकाशयत्। तेन तं प्रति विशेषेण कृतयामि। मम पी० ए० ('वैयक्तिक-सहायः'), सरदार तीरथसिंहः अस्य सन्दर्भस्य 'टाइप्'-लिखित-रूपस्य निष्पादने स्व-कष्टम् उपेक्ष्य साहाय्यम् आचरितवान्। तस्य अपि गुणम् अवश्यं गृह्णामि।

२०, कर्जन् रोड्
देहरादून्
जुलाई १२, १९६६ ख्री०

हरबंससिंहः

# विषय-सूची







---

# [ १ ]

## भागवत आदेशः

इतः केवल-वर्ष-शतत्रयात् पूर्वं खलु श्रीगुरुगोविन्दसिंह-भगवत्-पादा भुवम् अवतेरुः। तेन हि ते सर्वेषां दिव्य-पुरुषाणां भगवतो दूतानाम् अवताराणां च मध्ये काल-दृशाऽस्माकं नेदिष्ठाः। अपि च, न एतावता कालावधिना तान् अधिकृत्य अतिरञ्जन्यः प्रभूता लोका-ऽतीताः कथाः प्ररूढाः। एवं हि तेषाम् इतिहास-पुरुषता सुविज्ञाता सुविज्ञेया च। इत्थं गते तेषां चरिते देश-कालाऽपेक्षी लोक-रागोदयः समुचितः। अथाऽपि "लोक-सङ्ग्रहार्थं लोकोपकाराय च तैर् यद् यद् आचरितं तद् हि अनुसन्धित्सूनां, क्वचित्, सामस्त्येन लोचन-गोचरं न भवति।" इति वस्तु-तत्त्वं यावद् ध्यानारूढं न सन्तिष्ठते तावत् श्रीगुरुचरणानाम् अविकलं रूप-दर्शनं न सम्भवति।

मर्त्य-लोके लीला-विग्रह-ग्रहणात् प्राक् तेषां शरीर-बन्ध-विनिर्मुक्त आत्मा निराकारेण आनन्द-स्वरूपेण ब्रह्मणा सायुज्यम् अनुयोगूयाञ्चक्रे। तेषाम् एव वचनम् अत्र प्रमाणम्। तथा-हि, 'विचित्रनाटक'-संज्ञितायां स्व-कृतौ तैः प्रतिपादितम् :—

"एकस्मिन् पूर्व-जन्मनि सप्त-शृङ्गके हेमकुन्तशैले हिमधौते विपक्त-प्रान्तरे कृतानां भक्ति-भूयिष्ठ-तपसां फलेन पुनर्-जन्म-हेतु-

बन्धं छित्वा मया द्वैतं विधूतम्, अद्वितीयेन ब्रह्मणा च साकम् अद्वैतम् अर्जितम्। अथ यदा सर्व-तन्त्र-स्व-तन्त्रेण परमात्मना आत्मनो मनीषया मर्त्य-लोकेऽवतरणाय अहम् आदिष्टः, तदा न मह्यं तेन दिव्येन परम-पुरुषेण वियोगोऽरोचिष्ट।" इति।

अर्थोऽयम् इत्थं तैः प्रकाश्यते :—

रममाणो मदीयात्मा भगवत्-पादयोस्तदा।
विप्रयोगं ततो नैव क्षणिकमप्यरूरुचत्॥

भगवांस्त्वात्मनो भावं बोधयन् मे समादिशत्।
पुत्रीयंस्त्वामहं युञ्जे प्राशिषाऽपरिमेयया।
प्रशास्मि च—'क्षितौ धर्मः सर्वत्र सम्प्रवर्त्त्यताम्॥

व्रज प्रथय मे धर्मं दिक्षु सर्वासु भूतले।
निरुन्धि जीवलोकं च मनोमुखा-ऽध्व धावनात्'॥

धर्मस्य इतिहासेषु एतादृशं शब्द-प्रमाणं दुर्लभम्। अपि च, ईश्वरवादिभिर् अभ्युपगम्यमानानां सिद्धान्तानां समर्थनेऽपि अस्य वचनस्य अर्थवत्त्वं निर्विवादम्। पारमेश्वरिकी सत्ता हि अनेन वचनेन अञ्जसा विज्ञाप्यते। भगवान् भक्तैः सुलभः, ये च तस्य इच्छां प्रमाणी-कुर्वन्ति, यांश्च असौ स्वयम् अभ्युपपदनीयतया वृणुते ते हि तेन सह सायुज्यं समासादयन्ति। अथ 'विचित्रनाटक'—वचनेन एव श्रीगुरुगोविन्दसिंह-भगवत्-पादानां वैकुण्ठाद् मर्त्यलोका-ऽवतरणम् अपि प्रमाणी-क्रियते। परब्रह्मणि जीवलोकस्य श्रद्धा-विश्वासौ द्रढयितुम्, अपथेन प्रतिष्ठमानांश्च लोकान् धर्म्येण पथा

प्रवर्त्तयितुं, परमेश्वरेण पुत्री-कृतानां, तेषाम् इह लोकेऽवतरणं बभूव। परमात्मना निर्दिष्टस्य अस्य कार्यद्वयस्य अनुष्ठानम् एव श्रीगुरुचरणानाम् अत्र आगमन-प्रयोजनं खलु आसीत्। परमात्मना सह तेषां सम्बन्धे, तैर् अनुष्ठास्यमानस्य परमेश्वरा-ऽऽदेशस्य च एवंविधे लोकोत्तरत्वे, सत्यपि न श्रीगुरुचरणैर् जातुचिदपि विज्ञापितम्—'दिव्या मदीया प्रकृतिः।' इति। हेतुश्च अत्र तेषां निरहङ्कारत्वं परमेश्वरे च परमा श्रद्धा। ये पुरुषाः श्रीगुरुचरणान् परमेश्वरतया प्रतिपेदिरे तान् व्याक्रोशद्भिस् तैर् 'विचित्रनाटके' अभ्युक्तम् :—

योऽवगच्छति मामीशं नरके स पतिष्यति।
दासोऽहं परमेशस्य, न सन्देहोऽत्र युज्यते॥ इति।

वस्तुतः 'सर्वे भद्राणि पश्यन्तु' इति सर्व-मङ्गल्यया कामनया सह जातया 'परमपुरुषस्य आदेशस्य पालयिताऽहं तस्य दासः।' इति भावना एव श्रीगुरुचरणानां भृश-मोदकरी बभूव। 'निर्धूत-सर्व-मर्त्य-भयोऽहं परमेश्वरोपदेशं मानवमात्रस्य उपदेक्ष्यामि, न च जातिं वा धर्मं वा उपादाय कल्प्यमानं मानव-विषयकम् उच्चावच-भेदम् अभ्युपगमिष्यामि। सर्वे हि मानवाः समानाः।' इति स्वा-ऽभिमतं तैः स्फुटेन बलवता च स्वरेण विज्ञप्तम्। तथाहि, 'अकाल-उस्तत'—नाम्नि भगवत्-स्तोत्रे तैर् अभिहितम् :—

एष माहम्मदीयोऽसौ हिन्दुरिति भिदा मृषा।
एकस्य लोकनाथस्य प्रजाः विश्वे हि मानवाः॥

स्रष्टा धर्त्ता विधर्त्ता च तेषां पालयिता च सः।
तस्मान् मनुजमात्रस्य समानत्वं सुनिश्चितम्॥

न हि नमाज़तो भिन्ने सन्ध्या-पूजे कथञ्चन।
मन्दिरं च न मस्जिदो भिद्यते ज्ञानिनां मते।
विश्वेषां हि मनुष्याणाम् एवमेकत्वमीक्ष्यताम् ॥ इति ॥

श्रद्धा-भक्ति-योगो नाम अयम् एव धर्मः सिक्खधर्मस्य प्रतिष्ठापकैः श्रीगुरुनानक-भगवत्-पादैः ( १४६९–१५३९ ख्री० ), श्रीगुरुगोविन्दसिंह-भगवत्-पादेभ्यः शताब्दी-द्वयात् पूर्वम्, प्रतिपादयाम्बभूवे। ईश्वरस्य एकत्वम् अभ्युपगच्छद्भिः श्रीगुरुनानक-भगवत्-पादैः कतिपये विश्वजनीना आचार-सिद्धान्ता निरतिशय-निर्व्याजाभ्यां श्रद्धा-विनयाभ्याम् उपदिष्टाः। तेषां जीवित-काले भारतीयानां धर्मो धर्मा-ऽङ्गत्वेन अनुष्ठीयमानैः कर्म-काण्डैर् जटिलो दुर्धरश्च बभूव। तादृश-धर्म-कारणात्, वैदेशिकैर् आततायिभिः पुनः पुनः कृतैर् आक्रमणानां च हेतोर् भारतीयानां श्रद्धा-बलं मनो-बलं च बलवद् अक्षीयत। तदा श्रीगुरुनानक-भगवत्-पादैर् उपदिश्यमानः सरलः सरसः प्राणमनसयोः कृते रसायनी-भूतो धर्मस्तदानीन्तन्या भारत-जनताया हृदयानि हठाद् आजहार उल्लाघतां च आनिनाय। तत्र-भवताम् आद्य-श्रीगुरुचरणानां जीवित-काल एव बहवो जनास्तेषां सम्प्रदायस्य दीक्षाम् आपुः। अथ सोऽभिनवः सम्प्रदायो दूरं प्रससार सर्वलक्षणोपेतो धर्मश्च बभूव। तथाहि, श्रीगुरुगोविन्दसिंह-भगवत्-पादा 'विचित्रनाटके' निरूपयन्ति :—"कलियुगे श्रीगुरुनानक-पूज्य-पादैर् धर्मप्रतिष्ठा कृता, भक्तानां हिताय च काऽपि अपूर्वा श्रेयो-मार्ग-दिग् उन्मीलिता। ये हि जनाः श्रीगुरुनानक-पूज्य-पादानां पदाङ्कान् अनुवर्तन्ते न

जातु-चित् पाप-पङ्क-परमाणुर् अपि तान् स्पृशति क्लिश्नाति च।" इति।

श्रीगुरुगोविन्दसिंह-भगवत्-पादा विशिष्टया गुरु-परम्परया श्रीगुरुनानक-भगवत्-पादानां दाय-भूतं सम्प्रदायम् अधिजग्मुः। ननु कैर् नाम विशिष्टैर् लक्षणैर् लक्षितः खलु अयं सम्प्रदायोऽभूद् ? इति चेत्, श्रीगुरुनानक-भगवत्-पादानाम् उपदेश एव अस्य राद्धान्त-बीजम् आसीत्। पञ्च शताब्दीर् भारते वर्षे मिथो विवदमानैर् हिन्दु-माहम्मदीयैर् अस्मिन् अभिनवे धर्मे प्रतिस्व-मतैक्य-भूमिर् आसाद्यत। प्रकामं श्रीगुरुनानक-भगवत्-पादानाम् उपज्ञा-भूतस्य धर्मस्य केचन सिद्धान्ताः हिन्दु-माहम्मदीयोभय-धर्म-सिद्धान्त-समाना आसन्, अथाऽपि धर्मोऽसौ स्वलक्षणः, आध्यात्मिकता-प्रधानः, समस्त-जन-हृदया-ऽऽवर्जकश्च खलु बभूव। ईश्वरस्य एकत्वम्, सकल-मनुज-बन्धुत्वम्, चातुर्वर्ण्य-व्यवस्थाया अस्वीकारः, प्रतिमा-पूजाया निष्फलत्वं च इति सिद्धान्तास् तत्र अभिनवे सिक्ख-धर्मे प्रधाना बभूवुः। स्व-सम्प्रदायं सर्वासु दिक्षु सर्वान् जनान् प्रवक्ष्यन्तः 'मर्दाना'-नामकेन आत्मनो माहम्मदीय-भक्तेन द्वितीयाः, श्रीगुरु-नानक-भगवत्-पादा आ-हिमाद्रेः, आ-दक्षिण-समुद्राद्, आ-प्राग्-ज्योतिषाद्, आ-'मक्का'-नगराच्च भुवं स-प्रयासं पर्यटन्ति स्म। तेषाम् ऋज्वी धर्म-पद्धतिर् विश्वजनीन उपदेशश्च सर्व-लोकंपृणो बभूव। ये हि जनास् तान् स्व-गुरुत्वेन प्रपन्नास् तैः काचिद् अदृष्ट-पूर्वा जीवन-यापन-पद्धा प्राप्ता। वर्ण-विभागस्य जटिल-कर्मकाण्डस्य च परित्यागोऽस्य अभिनव-धर्म-वर्त्मनः प्रथमो विशेषो बभूव। अत्र

सञ्चरतां नराणां बुद्धौ अपूर्वस्य एव नव-प्राणबलेन उपचितस्य धर्मस्य सतत्त्वं स्फुटं भासते स्म, तेषां मनसि च जीवलोकीयान् व्यापारान् प्रति किमपि अननुभूत-पूर्व व्यवसायशालित्वम् अनुभूयते स्म। श्रीगुरुनानक-भगवत्-पादा नवोपदिष्टस्य स्व-सम्प्रदायस्य अनुवर्त्तिषु अनुरागिषु च समुत्पत्स्यमानाश् चित्तवृत्तीः प्रागेव आकलयन्। भारतं वर्षम् आक्रामतो बाबरस्य क्रूर-कर्माणि अवलोकयतां श्रीगुरुचरणानां हृदये ये दया-भावा उद्गतास् तेऽत्र विषये विशेषेण तेषां मनोगतस्य अभिव्यञ्जनाय अलम्। बाबरस्य नार्शस्येन तेषां मनो बलवद् अदूयत, ते च हिन्दु-माहम्मदीय-सर्व-भारत्यानां शोकान् करुण-रसाऽनुकूलैर् ऊर्जस्वलैः पदैर् अवर्णयन्। 'आदिग्रन्थ'-नामनि सिक्ख-धर्मग्रन्थे सङ्गृहीतानि तद्-विरचितानि 'पदानि' अदभ्रेण राष्ट्र-प्रेम्णा परिव्याप्तानि वर्त्तन्ते। तेषु हि अशरणा भारतीय-प्रजा दन्दशूकतया दृढ कदर्थयतस् तुरुष्कादि-भटान् प्रति यथा आक्रोशाऽमर्षप्रकाशनम् आलोक्यते न तथा तदानीन्तने काव्यादि-रूपे वाङ्मयाऽन्तरे। श्रीगुरुचरणा अभिदधति:—"आततायित्वं प्रतन्वन् बाबरः कुमानगरतो भारतम् अभियाति, प्रसह्य च पौर-सकाशात् प्राभृतकानि प्रेप्सति। सदाचारा राजधर्माश् च विनष्टाः। पापाचारा एव परितः प्रसृताः। विप्राः 'क़ाजिन'श् च स्व-धर्मान् प्रस्मृतवन्तः। राक्षस-विवाहाः प्रथाम् आरूढाः। विह्वला विधुराः सत्यो माहम्मदीय-नार्यो यथा 'कुरानं' पठन्ति परमात्मानं च सम्बोध्य तत्-पुरः स्व-पराभवान् गद्गदेन कण्ठेन आवेदयन्ति तथा सवर्ण-निर्वर्ण-सर्व-हिन्दु-नार्योऽपि विदेश्यैर् आततायिभिर् उत्पादितैस् तैस् तैर् दुःखैर्

भूयसा अभिभूयन्ते, परिदेवन्ते च। किञ्च, जगत्-पतिना 'खुरासानः' आत्मनश् छाययाऽनुगृहीतः, भारतं वर्षं च बाबरस्य बर्बर-कर्माणि सोढुं नीरक्षं कृतम्। हं हो, नाऽत्र विधाता अस्मत्-कृतं दोषारोपं स्वी-करोति। कृतान्तः किल अस्माकम् अदाक्षिणः। प्रभो! त्वं हि प्राणिमात्रस्य सामान्यः शरण्यः। अपि तादृशं कदनं क्रन्दनं च न तव मनस्तापं तनोति?"

श्रीगुरुनानक-भगवत्-पादानां भक्तेषु अन्यतमो लहना-नामा परमभक्त आसीत्। श्रीगुरुचरणानाम् अनुशासनानि तेन तथा आत्मसात् कृतानि, आचारश् च तस्य तथा विपूतः प्रशस्तश् च आसीत्, यथा श्रीगुरुचरणैः स्व-तनुजनुष उपेक्ष्य अमुष्मै उत्तराधिकारः प्रत्तः। श्रीगुरुचरणास् तं परिष्वज्य अब्रुवन्—'अङ्गदस् त्वं खल्वसि।' इति।

अथ आद्येषु गुरुषु श्रीनानक-भगवत्-पादेषु ब्रह्मभूयं गतिं गतेषु द्वितीयगुरुश्रीपूज्याऽङ्गदमहाभागाः आद्य-श्रीगुरुचरणैर् उपक्रान्तस्य धर्म-प्रचार-कार्यस्य धुरं निपुणं वोढुं प्रायतन्त, आद्य-श्रीगुरुभिः प्रणीतानि 'पदानि' च तेषां जीवन-कथाश्च गुरुमुखी-लिप्यां लेखयामासुः। एवं हि श्रीमहाभागा-ऽङ्गद-पूज्यपादैर् लेखिता ग्रन्थाः सिक्खानां धार्मिक-वाङ्मयस्य प्रथमे ग्रन्था बभूवुः, तत एव च सिक्ख-धार्मिक-वाङ्मयस्य प्रारम्भो बभूव। अमीभिः श्रीगुरुचरणैर् भूयसा प्रयाम् आनीता, श्रीगुरुनानक-भगवत्-पादैः प्रवर्तिता, चातुर्वर्ण्य-व्यवस्था-विचार-शून्यानां भोजनशालानां स्थापना-

पद्धतिः विशेषतो लोकप्रियतां गता। तासु भोजनशालासु चातुर्वर्णिका लोकाः प्रतिस्व-वर्णा-ऽभिमानं विहाय एकत्र अभ्यवहरन्ति स्म। तादृशी भोजनशाला-पद्धतिः समाजस्य भूरि-दोष-निराकरणे नवता-ऽऽपादने च बलवत् साधनम् असिध्यत्।

तृतीयश्रीगुरुचरणा भारतवर्षस्य तेषु तेषु प्रदेशेषु द्वाविंशतिं पीठानि प्रतिष्ठाप्य सिक्ख-धर्म-संस्थां सम्यग् अपुष्णन्, नारीषु निरूढिम् आगते अवगुण्ठन-'सती'-प्रथे च विदूष्य लोके नारी-स्थिति-पदम् उन्नेतुं प्रायस्यन्। चतुर्थगुरु-श्रीरामदास-पूज्य-पादैः 'अमृतसर'-संज्ञं नगरं कारितम्। एतच्च नगरं काल-क्रमेण सिक्खानां पुण्यतमं तीर्थ-धाम सञ्जातम्।

पञ्चम-नानकत्वेन अभिख्याताः, पञ्चम-गुरुश्रीपूज्यार्जुन-देव-पादा अभूवन्। तेषां धर्म-श्रद्धाम् असहमानेन मुगल-सम्राजा जहाँगीरेण सुदुःसहाः शारीरिकीः पीडाः प्रदाय ते देवभूयं गमिताः। तैर् हि सिक्ख-धर्म-वीर-गतिं प्राप्य सिक्खानां कृते धर्म-वीर-गति-प्राप्त्या दिग् दर्शिता। तेषां धर्म-वीर-गति-प्राप्तिः सिक्खान् शान्त-दान्तत्वस्य उदारं धर्मम् अब्रवीत्। तत आरभ्य सिक्खानां सा शान्त-दान्तत्व-वृत्तिर् अविच्छिन्नया परम्परया प्रवर्त्तते। इतिहासस्य अनेकेषु पर्वसु प्राणान् प्रतिष्ठापयताम् उदात्तत्वं च आदधतां तद्-वृत्तिशालिनां स्त्री-पुंसानां विपुलानि निरुपमानि निदर्शनानि सिक्ख-नाराशंसीषु गीयन्ते। अमीभिः पञ्चम-श्रीगुरुचरणैर् एव 'ग्रन्थ-साहबो' नाम सिक्ख-धर्म-ग्रन्थः सङ्कलितः सम्पादितश् च, 'अमृतसर' नगरे च 'हरमन्दिर'-सञ्ज्ञितं सिक्ख धर्म-मन्दिरं निर्मापितम्।

हरगोविन्देति-सुगृहीतनामधेयम् तत्-पुत्रः षष्ठो गुरुर् बभूव। सिक्खानां शान्तिः क्षान्तिश् च आततायिभ्यस् तेषां धर्मादिकं त्रातुं नाऽलम् इति आकलय्य एतैः श्रीगुरुचरणैः कृपाण आत्म-रक्षायाः साधना-ऽन्तरतया स्वी-कृतः, यथा-ऽवसरं तत्-प्रयोगश् च अनुमतः।

तत्-पुत्रः सप्तमो गुरुर् अभूत्। अमीषां सप्तम-श्रीगुरुचरणानां जीवित-काले सिक्खानां तदानीन्तनेन भारत-भू-शासकेन सह न कश्चिद् विग्रहोऽभवत्। अथाऽपि, षष्ठ-श्रीगुरुचरणैर् या सैनिकी व्यवस्था प्रारब्धा साऽनुपहततया प्रावर्त्तिष्ट। अमीषां हि सप्तम-श्रीगुरुचरणानां सभा राज-सभाम् अनुजहार, ते च सादिनां द्विशतोत्तरस्य सहस्र-द्वयस्य स्वामिनोऽभूवन्। एवं गतेऽपि तेषाम् आध्यात्मिकी चर्या श्रीगुरुनानक-पूज्य-पादैः प्रदर्शितां पदवीम् अनुपद्य प्रत्यहं निष्प्रत्यूहं प्रववृते। परमार्थतस् तु अन्याय-परायणेभ्यः दुष्कृद्भ्यः शासकेभ्य आत्म-गुप्तये सैन्य-बल-सञ्चयनं तदा सिक्ख-सम्प्रदाये धार्मिकेतिकर्तव्यतायां परिगण्यते स्म। अथ तदुत्तरकाले उत्तिष्ठमाने सिक्ख-धर्मे एतादृश आचार-विशेषो देश-काला-ऽवस्था-प्रेरणा-जन्यः किल आसीत्।

हरकृष्णेतिसुगृहीत-नामधेया अष्टम श्रीगुरुचरणाः शैशवे एव गुरु पीठम् आरुरुहुः, वर्षत्रयमात्र च तद् अलञ्चक्रुः। अमीषां श्रीगुरुचरणानां सूक्ष्मेक्षिका, विलक्षणा सुतीक्ष्णा च अभूत्, तत्-पूर्वकश् च व्यवहारः सुतरां शोभनः। आत्मनम् तांम् तान नेदिष्ठ-सम्बन्धिनः समुपेक्ष्य मरण शय्या गतः 'मम तनु त्यागाद् अनन्तरं

तेगबहादुरः गुरुपीठम् आरोहतु, न कश्चिद् अपर.।' इति साऽऽयासं निर्दिशद्भिस् तैः सिक्खानां समक्षं 'किं कर्म ? किम् अकर्म ?' इति विषये परमोदारं निदर्शनम् उपन्यस्तम्। अथ गुरुपीठम् अलिप्सुस् तेगबहादुरो यथा गुरु-पीठा-ऽऽरोहणा-ऽनुगुण-गुण-गणैर् उपेत आसीत्, न तथा कश्चिद् अपरः।

एवं हि श्रीगुरुगोविन्दसिंहस्य पितृपादाः श्रीतेगबहादुर-पूज्य-पादाः गुरु-पारोवर्ये नवमं गुरु पदम् अलञ्चक्रुः। सिक्खानां चारित्र्यं संस्था च अमीषां दश-देशिकानां छायायाम् अनुदिवसं पोषम् अवाप। सर्वैर् अपि दशभिर् देशिकैः स्व-स्व-रीति-नीतिभ्यां सिक्ख-धर्मस्य नाना-ऽङ्गानि पोषितानि। तथाहि, एतेषां दश देशिकानाम् एकैक आत्मन आचारम् आत्मनोऽनुवर्त्तिनां कृते निदर्शनी-कृत्य तान् एकैकम् आचारा-ऽध्यायम् अध्यापयामास, अथवा परिवर्त्तमाना देश-काला-ऽवस्था अनुसृत्य सम्पोषम् अपेक्षमाणां राष्ट्रहिता-ऽनुकूलां वृत्तिं समर्थयामास। यदा हि श्रीगुरुगोविन्दसिंह-पूज्य-पादाः श्रीगुरुनानक-देव-पादैः प्रतिष्ठापितं गुरुपीठम् आरूरुहुः, ईदृशो हि क्रमोपचितो दुर्लभश् च गुरु-दायस् तान् उपागतः।

'सर्वे गुरव एकस्य एव ब्रह्मणोंऽशाः, ब्रह्मणा च गुरु-पीठेऽभिषिक्ता दिव्यात्मानो बभूवुः। तेषां मध्ये पूर्वः पूर्वः परं परं क्रमेण स्वा-ऽऽत्म-ज्योतिषा द्योतयाञ्चक्रे, गुरु-दायत्वेन सम्प्राप्ताम् आध्यात्मिकीं सम्पदं च अनुष्ठेयत्वेन उपदिष्टं धर्म-रक्षण-प्रचारणं च तदा-ऽऽयत्तां नीतवान्।' इति सिक्खानां चिरन्तनोऽभ्युपगमः।

अत्राऽपि विषये, पुनः, 'विचित्रनाटकम्' एव विशदं प्रमाणम्। तत्र हि श्रीगुरुगोविन्दसिंह भगवत्-पादैर् उक्तम् :—

"नानक अङ्गद-शरीरं गृहीतवान्। अथ यथा दीपो दीपान्तरात् प्रज्वलितो भवति तथा नानकः अमरदास-नाम्ना विश्रुतिं जगाम श्रीगुरुनानक-भगवत् पादाः अङ्गद-रूपतया अपूज्यन्त। अङ्गद एवं अमरदासतया अभिज्ञायते स्म। अथ अमरदासः रामदासः जज्ञे। ब्रह्मभूयं गमिष्यन् रामदासो गुरु पदम् अर्जुनाय प्रादात्। अर्जुनः हरगोविन्दम् आत्मन उत्तरा-ऽधिकार-भाजनम्-अकरोत्, स च हररायम्। अथ हरकृष्णो नाम तत्-पुत्रो गुरुर् अभवत्। ततो तेगबहादुरः गुरुपद प्राप्तवान्।" इति।

---

## [ २ ]

# पाटलिपुत्रे दिव्यात्मनः शैशवम्

अवरङ्गजेबे भारत भुवं शासति सति श्रीगुरुतेगबहादुर-पूज्य-पादाः (१६२१–१६७५ ख्री.) पावनं गुरु-पीठम् आरुरुहुः। अवरङ्गजेबः स्वजनकात् शाहजहाँतो बलाद् राज्य-सिंहासनम् अपहृत्य तं बन्दितया आगरा दुर्गे निवासितवान्, स्व-राज्यम् असपत्नयिष्यंश च सिंहासना ऽपहरणाद् अनन्तरं आद्यानि कतिपय वर्षाणि अरातीनां दमने भ्रातृणां च एकैकशो हनने व्यग्रो बभूव। एवं सत्यपि न स श्रीगुरुतेगबहादुर-पूज्य पादानां धर्म प्रचार-यात्रासु अपि उपेक्षां कृतवान्। तथाहि, आत्मनः परिवारेण कतिपयैर् भक्तैश् च परिवृताः श्रीगुरुचरणाः श्रीगुरुनानक देव-पादानां धर्मानुशासनं धर्म प्रियान् सिक्खान् प्रश्नुवन्तः 'पञ्चाप'तः प्राच्य-देशान प्रति प्रस्थिताः। तेषु दिल्लीं निकषा प्राप्तेषु, तदागमन-समाचारान् आकर्ण्य सङ्घटन-कार्य परायणान् सर्वान् सर्वदा आशङ्कितया दृशा विलोकयित्रा अवरङ्गजेबेन तेषां निग्रहस्य आदेशः कृतः। अथ बन्दी-कृताः श्रीगुरुचरणा अवरङ्गजेबस्य सभास्तारेषु अन्यतमस्य जयपुर नरेशस्य रामसिंहस्य सप्रश्रया-ऽनुरोधेन सम्राजा बन्धनाद् मोचिता। अस्य हि जयपुराधीशस्य रामसिंहस्य तत् कुटुम्बस्य च श्रीगुरुहरगोविन्द पूज्य पादानां कालाद् आरभ्य श्रीगुरुनानकदेव पादैः प्रतिष्ठापिते गुरु-गृहे दृढा भक्तिः खलु बभूव।

अथ पुनर् यात्राः प्रारब्धुं स्व-तन्त्राः श्रीगुरुचरणाः प्राङ्मुखाः प्रतिष्ठमानाः प्रयाग-काशी-गया-ऽऽदिषु तीर्थेषु स्थायं स्थायं पाटलिपुत्रं प्राप्ताः । तत्र प्राप्य यात्रा-परिखिन्नं तेषां कुटुम्बं ततोऽग्रे प्रस्थातुं न किल अपारयत् । तस्मात् स्व-पत्नीं तस्या भ्रातुः कृपालुचन्द्रस्य आत्मनो मातुश् च चिन्ता-विषयं विधाय, पाटलिपुत्रतोऽपि प्राच्येषु देशेषु श्रीगुरुनानक-देव-पादैः पवित्रितानि स्थानानि तत्रत्यान् सिक्खांश् च दिदृक्षवः श्रीगुरुचरणास् तत्र तत्र पर्यटन्तः प्राग्ज्योतिषं प्राप्ताः ।

पाटलिपुत्रं नाम प्राचीनं पुरं पुरा विशालस्य प्राचीन-साम्राज्यस्य राजधानी बभूव, वर्ष-सहस्र-पर्यन्तं च भारतवर्षस्य प्रधानं नगरम् अगण्यत । चतुर्विंशति-शत-वर्ष-पूर्वं च सम्राजम् अजातशत्रुम्, तत्-कृतस्य कस्याचिद् दुष्कर्मणो हेतोः, भर्त्सयितुं तत्र आगतस्य भगवतस् तथागतस्य चरणाभ्यां पवित्रितं बभूव किल । अथाऽपि नगरम् एतत् सर्वातिशायिनो गौरवस्य भगवदाशिषां च प्राप्तेर् अवसरस्य आगमनं प्रतीक्षमाणम् इव खलु आस्त । १६६६ तमे खीष्टाब्दे दिसम्बरमासस्य षड्विंशे दिवसे जगद्-ध्वान्तं ध्वंसयितुं ज्योतिर् एकं तत्र एकस्मिन् गृहे उदियाय । तस्मिन् हि शुभे अहनि परमात्मन इच्छां मूर्ध्ना वहन् तस्य पुत्रो वैकुण्ठाद् मर्त्य-लोकं किल आगतः—श्रीगुरुतेगबहादुर-पूज्य-पादानां धर्म-पत्नी 'माता गूजरी' बालम् एकम् असूत । स एव बालो यथा-कालं श्रीगुरुगोविन्दसिंहेति पुण्य-नामधेयेन लोक-विश्रुतो बभूव । एवं हि पाटलिपुत्रं नित्य-पवित्रता-गुणोपस्कृतं किल अजायत । श्रीगुरुगोविन्दसिंह-पूज्य-पादैः

स्व-'विचित्रनाटके' इत्थं खलु स्व-जन्मा-ऽवसर उपवर्णितः :—

"मम जनकः प्राच्यान् देशान् प्रति प्रस्थितः, बहूनि च पुण्य-धामानि अपश्यत्। .... एकं ज्योतिर् मर्त्य-रूपम् उपादाय प्रादुरभवत्। पाटलिपुत्रेऽहं जन्म गृहीतवान्।" इति।

अथ पाटलिपुत्रं महोत्सवस्य गभीरया मधुरया च धारया सम्प्लावितम्। तेषु हि दिवसेषु श्रीगुरुतेगवहादुर-पूज्य-पादाः प्राग्ज्योतिषे धुवरी-नामकं नगरम् अध्यासत। पुत्र-जन्मनः प्रमोद-जनके समाचारे तत्र प्राप्ते तदपि नगरं परमेण हर्षेण पुलकित-शरीरम् अजायत। श्रीगुरुचरणानां परः-शता भक्ताः प्रशंसकाश् च पाटलिपुत्रं तीर्थं मत्त्वा भारतस्य नाना-दिग्-देशेभ्यस् तत्र सङ्गताः। तेषां प्रथमा-ऽऽगतानां मध्ये कोऽपि माहम्मदीय-यतिः खलु वभूव। नव-जातम् अर्भकम् अवलोक्य तेन अभिहितम् :—'दिव्यात्मा खलु एषः।' इति। तदा च 'पन्चाप'-प्रदेशे घुरम-नाम्नि ग्रामे सय्यद-भिक्खनशाहो नाम उदार-चरितः प्रसिद्धश् च कश्चिद् माहम्मदीय-कुटीचरः प्रतिवसति स्म। श्रीगुरुगोविन्दसिंह-जन्म-दिने असौ प्राङ्मुखो भूत्वा प्रणनाम। तम् एवं नमस्-कुर्वन्तम् आलोक्य तस्य माहम्मदीय-भक्ताः "न हि कोऽपि माहम्मदीयः 'काबा'-दिग्-वर्जं दिशा-ऽन्तरे तथा प्रणन्तुम् अर्हति।" इति रुषा विप्रतिपद्यन्ते स्म। तान् प्रबोधयन् भिक्खनशाह उवाच :—"प्राच्ये हि नगर-विशेषे भगवान् विश्वम्भरः स्वयं मनुज-जातका-ऽऽत्मना

अवनितलम् अवतीर्णोऽस्ति । भक्त-वत्सलं तं भगवन्तम् अहं प्रणतवान्, न सामान्यं मर्त्य-विशेषम् ।" इति ।

'गोविन्दस्य भक्तः' इति अभिप्रेत्य तस्य बालकस्य 'गोविन्द' इति नाम अक्रियत । स च बालकः पाटलिपुत्रे पौर-वृन्दानां प्रेम-पूजा-पात्रम् अजनि । तस्य हि स्निग्ध-मुग्ध-मुख-मण्डलम् अप्रमेय-नित्य-ब्रह्मणः प्रकाशेन समुद्भासमानम् इव प्रतिभाति स्म । स्वयं पाटलिपुत्रं पुनर् उच्छ्वसितम् इव प्रतीयते स्म । न ततः परं तस्य 'प्राचीनपुरम्' इति अभिख्या भवित्री । नगरस्य तस्य प्राणाः सम्मोहनरूपवतो गोविन्दस्य सन्निधानेन उन्मादिता इव अभूवन् । अथ कालक्रमेण दशातो दशान्तरं प्रविशन् गोविन्दसिंहो यदा गृहाद् निष्क्रम्य वयस्यैः सह क्रीडन-योग्योऽभूत् तदा पाटलिपुत्रस्य प्रतोलिकाम् तस्य बालोचितैः संलापैर् हासैश् च अगुञ्जन् । क्रीडा-सहचरान् वर्ग-द्वयात्मना विभज्य कृतक-रण-करणं बाल-गोविन्दसिंहस्य परम-प्रीतिकरी क्रीडा बभूव । एवंविधासु क्रीडासु च असौ एव नियमेन नायक-भूमिकाम् अवहत् । तस्य मन कृतकैः शरैश् चापैश् च क्रीडने वा, स्व-सहचरान् आत्मनोऽनुयायिनो विधाय अरिभिर् अनुपलक्ष्यमाणे सङ्ग्रामोपयोगिनि अभिषेणने वा, यथा रमते स्म, न तथा विनोदा-उन्तरे । दिवसं स्वैरं क्रीडित्वा तदवसाने स क्रीडा-सहचरान् स्व-गृहे स्वादुना भोजनेन अप्रीणयत् । ईदृश सहचर-प्रीणनं तस्य प्रचुर-प्रीतिकरम् अभूत् । तस्य माता पितामही च उभे तस्य सहचरान् सुतराम् अभिनन्दतः स्म, आनन्दयतः स्म च । ते तेभ्यो विविधं मिष्टं प्रायच्छताम्, आशिषम् च अयोजताम् ।

द्वे अपि देव्यौ वाल-गोविन्दसिंहं दिने दिने वर्धमानं वीक्ष्य नितराम् अमोदेताम्, परमात्मनश् च प्रार्थयेताम्ः—'प्रभो! त्वम् अस्य वालस्य गोप्ता, अशेषा-ऽनिष्टानां निवारयिता च भूयाः।' इति। क्रीडा-व्यासक्तो वाल-गोविन्दसिंहः प्रतिदिनं कालम् अतिपात्य गृहान् प्रत्यावर्त्तत। तस्माद् एव तत्र सायन्तन्यौ ईश्वर-प्रार्थनो-पासने अपि काला-ऽतिपातेन चोभूयाञ्चक्राते। तत आरभ्य तां रूढिम् अनुरुध्य पाटलिपुत्रस्थे 'पटना-साहव गुरुद्वारा' इति सञ्ज्ञिते सिक्ख-धर्ममन्दिरे सायन्तन्याः प्रार्थनायाः पाठो यावदद्य साधारण-कालाद् अनन्तरं भवति।

विनोद-हेतोः पुरन्ध्रीणां कुमारीणां च प्रवञ्चनम्, तासां मृण्मय-घटानां धनुषा प्रक्षिप्तैः पाषाण-गुलिकाभिर् भेदन च वाल-गोविन्दसिंहाय भृशम् अरोचत। एषा किल तस्य अन्या प्रिया क्रीडा अभूत्। माता गूजरी क्लेशितेन नारी-जनेन वहुकृत्व उपालभ्यत। परं को नाम वक्तुम् ईष्टे—'एवं क्लेश्य-मानास् ता ललना अननुभूत-पूर्वम् आनन्दं न अन्वभूवन्, अथवा उपालम्भकरीणां नारीणाम् अनुनयनं ताभ्यो घट-मूल्यदानं च मातुर् गूजर्याः सेफ्करं ननु आसीत्?' इति।

अथ वाल-गोविन्दसिंहस्य अव्याज-मनोहरं मुखं तत्रत्य-कतिपय-जनानां कृते विशेषेण अत्यानन्दनम अभवत्। तद्-यथा, निखिल-निगमा-ऽऽगम-पारङ्गतो लोक-महितः शिवदत्तो नाम कोऽपि वृद्ध-ब्राह्मणस् तदा पाटलिपुत्रे प्रतिवसति स्म। भक्तिमयस्य

आचार-पूतस्य च चरितस्य हेतोः स महा-पौर-जन-श्रद्धा-भाजनम् आसीत्। अन्तरात्मनः शान्तिं कामयमानेन तेन लक्ष्म्या अनुगृहीतं लोके प्रतिष्ठा-प्राप्तं च स्व-गृहं परित्यक्तम्, अनन्यया दृढया च भक्त्या इष्ट-देवस्य मूर्तिर् अर्चिता, व्रतादि-भूयिष्ठस् तपो-मार्गश् च अनुसृतः, अथाऽपि स तदीप्सितं न प्राप्तवान्। तस्य हृदयम् अभीप्सितस्य अप्राप्तेः शून्यम् इव, स च अभीप्सितस्य प्राप्त्या मार्गं मार्गयमाण इव, अतिष्ठत्। एकदा यदा बाल-गोविन्दसिंहस् तस्य लोचन-गोचरोऽभूत् तदा तस्य अन्तः-करणे काचिद् विलक्षणा एव अनुभूतिर् अभवत्। सहसा तस्य अन्तरात्मनि शान्त-मधुरा वृत्तिः उदियाय, स च अन्वभवत्:—'मम मार्गणाऽवसिता।' इति। स हि बाल-गोविन्दसिंहस्य मुख मण्डलस्य दर्शने स्व-पर्येषणायाः परिसमाप्तिम् अपश्यत्। 'य आनन्दो मया सम्प्रति प्राप्तः स खलु सातत्येन अनन्तत्वेन च मम आत्मनि वर्त्तिषीष्ट।' इत्येव एको मनोरथस् तदानीं तस्य मनसि अवर्त्तिष्ट। ततः प्रभृति बाल-गोविन्दसिंहस्य मुख मण्डलम् एव तस्य ध्यान-समाध्योर् विषयो ऽजायत, तस्य एव च दर्शनम् असौ चिर-पूजितानाम् आत्मन इष्ट देवतानां साक्षाद् दर्शनम् अमन्यत।

अथ कतिपय-दिवसा-ऽनन्तरम् एकदा सुर सरितम् तीरे ध्याना-ऽवस्थितस्य शिवदत्तस्य प्रत्यङ्ङात्मा नवोपलब्धेन आनन्देन परिव्याप्त आसीत्; तस्मिन् अवसरे तस्य आशिषो भिक्षुर् महाराज-फतेहचन्द्र-मैनी स-भार्यस् तम् उपेतः। स हि तयोश् चिराद्

बहुमत आसीत्। पार्थिवान् सर्व-विधान् सुख-भोगान् अवाप्याऽपि निरपत्यतया तौ दम्पती अशान्त-चेतसौ अतिष्ठताम्। "मनुष्ये लोकान्तरं गते सम्पत्ति दायस्य लब्धा, पिण्डदानादि कर्मभिर् मनुष्यस्य नरकपातात् त्राता पुत्र एव।" इति विचार्य पुत्र-प्राप्त्यै तौ बलवद् आतुरौ अभूताम्। शिवदत्तस् तयोर् आगमन-हेतुं सम्यग् अबोधत्। आभाष्य स तौ अभापत :—"युवयोर् मनोरथं पूरयितुं प्रभु कोऽपि दिव्यो बालः। स च अत्रैव नगरे कृत-वासः। स एव युवाभ्यां प्रार्थनीयः।" इति।

अथ महाराज-फ़तेहचन्द्रस्य तत् पत्न्याश् च आराध्यो अभिनवो देवः बाल गोविन्दसिंहोऽजायत। तस्मिन् तयोर् अनुरक्तिर् भक्तिश् च अनुदिनं वृद्धिं गता। एकदा फ़तेहचन्द्रस्य पत्नी मनोरथान् विकल्पयन्ती स्व-प्राङ्गणम् अध्यास्त। तस्मिन् एव अवसरे यथा-नियमं वयस्यैः सार्कं नगर-वीथिषु स्वैरं विनोदान् वितन्वन् बाल गोविन्दसिंह उपांशु तत्र प्रविष्टः, तस्याः कण्ठं स्व बाहु-पाशे कृत्वा च मृदुना स्वरेण उवाच :—'मातः!' इति। तं शब्दं आकर्ण्य तस्याः कर्णौ मधुर गीति रसेन इव अपूर्येताम्, हृदयं च आनन्द-सन्दोहेन अस्थिरम् अजायत। लोचने उन्मील्य सा यावत् पश्यति तावद् बाल-गोविन्दसिंहं स्व-समक्षं स्थितम् आलोक्य विस्मयेन विस्मृताऽऽत्म-बोधा सञ्जायते। तस्यास् तत्-पतेश् च काम्यं किमपि अद्भुतं तस्याः पुरतोऽवर्त्तत। बाल गोविन्दसिंह-दर्शनात् तदुपकाराऽभिज्ञानाच्च उदीयमान आनन्दोद्रेकम् तयोर् हृदययोर्

न ममौ। तयोः पुत्रैषणा पूर्त्तिम् अगात्। तौ च दिवसस्य भूयिष्ठं भागं भगवतो ध्यानेन अर्चनेन च नेतुम् आरब्धवन्तौ। तयोर् भवनं सिक्खानां भक्ति-समागमस्य मन्दिरम् अजायत। तदा-प्रभृति यावदद्य तद् भवनं तद्-वद् वर्त्तते, पाटलिपुत्रे ऐतिहासिक-पुण्य-स्थानेषु च परिगण्यते।

अथ गृहान् प्रतिनिवृत्य गोविन्दसिंहेन उच्चैर् उक्तम्—"अद्य आत्मानं द्वैमातुरं खलु कृतवान् अस्मि।" इति।

माता गूजरी अप्राक्षीत्—"अथ कथं नु एकः सुतो द्वयोर् मात्रोः क्रोडयोः क्रीडिष्यति ?" इति।

"यथा एकश् चन्द्रो युगपद् द्वयोर् उदपानयोः।" गोविन्द-सिंहः प्रत्यब्रवीत्।

तदा पाटलिपुत्रे गोविन्दसिंहस्य अलौकिक-गुण-गण-हेतोस् तस्मिन् बद्धा-ऽनुरागाणां जनानां मध्ये रहीमबख्श-करीमबख्श-नामानौ माहम्मदीय-लघु-क्षितिपती आस्ताम्। गोविन्दसिंहस्य पुण्य-चरितेन परितः प्रसरत् पावनत्वं तयोर् मनसी तथा अहरद् यथा ताभ्याम् उद्यान-द्वयं भूखण्डं च एकं तस्य उपहारी-कृतम्। सा सम्पत्तिः सम्प्रति पाटलिपुत्रस्थस्य सिक्ख-धर्ममन्दिरस्य स्वं वर्त्तते।

गोविन्दसिंहस्य तातपादाः श्रीगुरुतेगबहादुर-पूज्य-पादाः प्राग्-ज्योतिषात् 'पञ्चापं' प्रतिनिवर्त्तमाना यदा स्वल्प-कालं पाटलिपुत्रेऽवमन् तदा गोविन्दसिंहम् तेषां दर्शनं कृतवान्। अथ

सकृत्-कृत-पितृ-चरण-दर्शनो गोविन्दसिंहः, क्रीडा-रसेन आक्षिप्त-हृदयोऽपि, भगवदवतारोचिते कलि-जीवोद्धरण-कर्मणि प्रवर्त्तमानोऽपि च, बहुशः पितृ-साहचर्य-सुखम् आसादयितुम् उत्सुकोऽभवत्। तन्मनोरथ-पूर्त्या अवसरश् च दिष्ट्या नचिराद् आगतः। तथाहि, तत्-कुटुम्बेन तत्-पितृपादानां सन्देशः प्राप्तः—"यूयं सर्वे 'पञ्चापं' प्रत्यागच्छत।" इति। सन्देशोऽयं गोविन्दसिंहस्य भृशानन्दनोऽभूत्॥

---

[ ३ ]

## दिल्ल्यां धर्म-वीर-गति-प्राप्तिः

पाटलिपुत्रतः प्रस्थानं हर्ष-विषादं-शबलं खलु बभूव। शैशवस्य प्रथमानि षड् वर्षाणि बाल-गोविन्दसिंहोऽत्र न्यवसत्। सर्व-चिन्ता-विमुक्तस्य हर्षमयस्य जीवन-कालस्य नाना-कोमल-स्मृतयस् तस्य हृदयं कुलायी-कृत्य आसत। दूर-यात्रायाः कृते सज्जी-क्रियमाणौ शिविका-रथौ अवलोक्य तस्य हर्ष-रोमाञ्चोऽजनि; परं तस्मिन्नेव क्षणे तस्य हृदयं सङ्गिनां क्रीडा-सहचराणां च स्मृत्या अस्थिरं बभूव। प्रस्थाना-ऽवसरे हिन्दु-माहम्मदीय-लोकाः, पण्डितशिवदत्तः, महाराज-फतेहचन्द्रमनी तत्-पत्नी, श्रीगुरुचरणा-ऽनुरागिणः, बाल गोविन्द-सिंहस्य सवयसः क्रीडासहचराश्च, अन्ये च बहवो जना दूरं श्रीगुरुतेगबहादुरपरिवारम् अन्वगच्छन्। बाल-गोविन्दसिंहम्, तस्य जननीम्, 'माता'—गूजरीम्, पितामहीं नानकीं च आपृच्छतः, 'अमीषां पन्थानः शिवाः सन्तु।' इति आशंसया मन्त्र-श्लोकादींश्च उच्चारयतम् तान् पौरान् विलोक्य कस्य नाम धैर्यं न विगलितम्।

श्रीगुरुचरणेषु तत्-परिवारे च श्रद्धा-ऽनुरागा ये पाटलिपुत्र-वासिनो गुरु-परिवारेण विरहिताः पाटलिपुत्रे एव न्यवसन् ते पाटलिपुत्रे प्रतिदिनं सम्पद्यमानेषु सिक्ख-धर्म-समागमेषु उपस्थाय शान्तिम् अवापुः। प्रातस्तने सायन्तने च समागमे अवमिते सति भक्ताः किञ्चित्-कालं धर्म-मन्दिरे एव अतिष्ठन्, अचिर-पूर्वम्

अतीतानि स्व-सौभाग्य-दिनानि च, स्व-मध्ये उषितवतो लोकोत्तर-चरितस्य बालस्य अद्भुतं चरित्रं च विषयी-कृत्य मिथः संलापम् अकुर्वन्। गोविन्दसिंह-जन्म-गृहं धर्म-मन्दिरतां गतम्। अद्यत्वे तद् गृहं सिक्खानां पवित्रतमेषु पुण्य-स्थानेषु, सिक्खैर् धर्म-विषये यानि चत्वारि पीठानि परम-प्रमाणत्वेन आद्रियन्ते तेषु च, एकतमं परिगण्यते। तस्मिन् पावने गृहे श्रीगुरुगोविन्दसिंह-भगवत्-पादानां 'शिशु-दोला, उपानहौ, बाणाः, कृपाणा' इत्यादीनि कतिपयानि वस्तूनि सुरक्षितानि। श्रीगुरुगोविन्दसिंह-भगवत्-पादाः स्व-हस्ताऽक्षर-न्यासेन प्रमाणी-कृत्य 'ग्रन्थ-साहब'स्य यद् एकं पुस्तकं पाटलिपुत्राय प्रहितवन्तः, प्रान्तेषु सुनिपुणम् आलिखितैः पुष्पैर् उद्भासितं तत् पुस्तकम् अपि तत्र संरक्षितम्।

काश्ययोध्या-लखनऊ-प्रभृतिषु नगरेषु चिरं स्थायं स्थायम् अक्लिष्टैर् यात्रा-खण्डैश्च पुरः सरत् श्रीगुरुतेगबहादुर-कुटुम्बं 'पञ्चापम्' आगच्छत्। अम्बाला-समीपे लखनौर-नाम्नि ग्रामे तत् षण्मासेभ्योऽधिकं कालं विशश्राम। प्रायेण द्वादशभिर् मासैः सा यात्रा अवसिता। गोविन्दसिंहं आगतम् आकर्ण्य लोका दूरात् तस्य दर्शनाय श्रीगुरुचरण-कुटुम्बस्य तं तं विश्रम-ग्रामम् आजग्मुः, पूर्ण-मनोरथाश्च बभूवुः।

सिक्ख-धर्म-'प्रचारकाः' प्रतिस्व-धर्म-प्रचार-मण्डलाद् भक्तान् बाल-गोविन्दसिंहस्य समीपम् आनयन्, तेषां सकाशाद् बाल-गोविन्दसिंहाय देयानि उपायनानि सङ्गृह्य च तस्मै न्यवेदयन्। बाल-गोविन्दसिंहस्य दर्शनं दर्शकानां हृदयानि हठाद् अहरत्, ते

दृष्टवतां मुखेभ्यः "बालकेन अनेन आयतौ धर्म-देशिकेन भाव्यम्" इत्येवं भविष्यद्-वाणी बलाद् उदगच्छत्। यत्र यत्र स न्यवसत् तत्र तत्र धर्म-समागमा धर्मग्रन्थ-पाठाश्च समपद्यन्त।

श्रीगुरुतेग़बहादुर-भगवत्-पादैर् हिमाचलस्य अञ्चले शिलोच्चय-शिखरे आनन्दपुरं नाम यद् नगरं कारितम्, तत्र वसन्तस् ते आत्मन आत्मजस्य आगमनं प्रतीक्षन्ते स्म। तेषां कुटुम्बे नगरोपकण्ठम् आगते सर्वे आनन्दपुरवासिनस् तद् अभिनन्दितुं नगराद् बहिर् आगच्छन्। एवं महता उत्सवेन समारोहेण च बाल-गोविन्दस्य च परिवारस्य च नगर-प्रवेशोऽभूत्। श्रीगुरुतेग़बहादुर-भगवत्-पादैः परमात्मानं प्रति यथा-विधि तदुपकार-स्मृतिः प्रकाशिता, भोजन-शालाया द्वारं च सर्वेषां कृते अपावृतम्। अन्नं जिघृक्षुः सर्वोऽपि लोको वर्ण-विभेदं विस्मृत्य एकत्र तत्र अभ्यवहृतवान्। 'गोविन्दसिंहः आनन्दपुरं प्राप्तः।' इति श्रुत्वा तद्-दर्शना-ऽभिलाषिणो भक्ता दूर-समीपात् आनन्दपुरम् आगन्तुम् आरभन्त। तैर् आनीतेषु बहुविधेषु उपहारेषु ईरान-ख़ुरासान-देशयोर् अश्वान् कुभा-गान्धार-नगरयोः शस्त्राणि च गोविन्दसिंहो यथा आद्रियत, न तथा उपहारा-ऽन्तराणि।

हिमाचलाऽञ्चलेऽवस्थिताद् आनन्दपुरात् पञ्च-प-क्रोशा-ऽन्तरे 'नैनादेवी'-मन्दिरेण उपशोभितस्य पर्वतस्य उत्तुङ्गतराणि शृङ्गाणि आनन्दपुरस्य रामणीयकं द्विगुणयन्ति। पर्वत-शिखरेभ्यो वेगेन अवतरन् अपि शतद्रुर् नाम नद आनन्दपुरं शिग्मा वहतः शिलोच्चयस्

चरणा-ऽग्रं चुम्बित्वा पुरः प्रसरति। पाटलिपुत्रे प्रतिवसन् गोविन्द-सिंहो नगरं निकषा जोषं प्रवहन्त्या भागीरथ्या मन्द-मन्दं सतत-कलकलम् आकर्णयन् तृप्तिं न जगाम। हिमाचला-ऽञ्चले स्थितस्य आनन्दपुरस्य ईदृशं रामणीयकम् तन्मनोऽधिकतरम् अरमयत्। आनन्दपुर-शैल-लक्ष्म्याः एवंविधं मादकं रूपं विलोक्य तस्य हृदयम् एकपदे चञ्चलायते स्म। स हि स्वैरम् इह अधित्यकासु उपत्यकासु च विहर्तुम् आरभत। इहत्यः सञ्जीवनः समीरणः गोविन्दसिंहस्य अङ्गानि प्रत्यग्रेण प्राण-बलेन असिञ्चत्। 'शस्त्रा-ऽस्त्र-सञ्चालना-ऽभ्यासः, कृतकानि योधनानि, मृगया च' इति तस्य विशेषेण प्रीतिकराणि मनो-विनोदनानि अभूवन्। तस्य पितृ-पादैः श्रीगुरुतेगबहादुर-भगवत्-पादैर् अधिष्ठीयमानाभ्यो धर्मोपदेश-कथा-प्रसङ्गा-द्यर्थं प्रत्यहं घटिताभ्यः सभाभ्यस् तस्य अध्यात्म-विद्या-लाभोऽभवत्। पाटलिपुत्र-निवास-काले माता गूजरी तस्य गुरुमुखीम् अशिक्षयत्। मागध्यादि विमिश्रा तस्य भाषा आनन्दपुर-वासिनां विमोहनी प्रहर्षणी चाऽभूत्। अत्र गोविन्दसिंहः संस्कृतं हिन्दीं पारसीक भाषां च अध्येतुम् आरभत। हिन्दी-संस्कृतयोर् अध्यापकः साहिबचन्द्र-ग्रन्थी नाम हिन्दी-संस्कृतयोर् महा-पण्डितः, पारसीक-भाषायाश्च शिक्षकः क़ाज़ीपीरमुहम्मद आसीत्। मनिया-नामा तस्य वयस्यः, य उत्तर-काले भाईमनीसिंह-नाम्ना विदितः, आत्मनो वैपश्चित्या धर्म-वीर-गति-प्राप्त्याश्च हेतोर् सिक्खेतिहासेऽक्षय्यं यशोऽर्जितवान्, तदा तत्-सतीर्थ्य आसीत्।

यथा भूतले स्वर्गायमाणम् आनन्दपुरं नाम नगरं तथैव

सुलभ-सर्व-भोगः स शैशव-कालो गोविन्दसिंहं भृशम् अमोदयत्। मनुष्यैर् देवैर् वा अभिवान्छनीयेषु भोगेषु कोऽपि तस्य दुर्लभो नाऽभूत्। अथाऽपि स्व-पितृ-पादानां श्रीगुरुतेगबहादुर-भगवत्-पादानां वात्सल्यं यथा तस्य सुखाय अभवत्, न तथा भोगा-ऽन्तरम्। स पितृ-स्नेहं महत्तमम् ईश्वरा-ऽनुग्रहम् अमन्यत। किन्तु एवं-विधे ऐश्वर्येऽपि स नियमेन प्रातः-सायम् ईश्वर-ध्यानं विद्या-ग्रहणं च चकार, अवशिष्टं च दिवस-भागं मृगयया वा वीरोचित-विनोदा-ऽन्तरेण वा अगमयत्। रात्रौ तस्मिन् स्व-शयन-गृहं प्रविष्टे सेवकास् तस्य पुरतो धर्म-ग्रन्थ-'पदानि' गायन्ति स्म। परं सुख-शान्ति-भूयिष्ठोऽयं कालो भाविन उग्रस्य उपप्लवस्य आमुखम्, आनन्दपुरं च आगामिनो राष्ट्रिय-भू-कम्पस्य बीज-क्षेत्रं बभूव।

अनागतस्य सूचकानि निमित्तानि तदा आनन्दपुरे एव अदृश्यन्त। तथाहि, आह्निकेषु स्व-प्रवचनेषु श्रीगुरुतेगबहादुर-भगवत्-पादा उपदिशन्ति स्म :—"साम्प्रतं धर्मस्य ग्लानिर् अधर्मस्य च अभ्युत्थानं भवति। तेन हि धर्मस्य परित्राणाय अधर्मस्य विनाशाय च आत्मा-ऽभिमानवान् जनः सर्वथा सज्जो भवितुम् अर्हति।" इति। तेषाम् उपदेशान् श्रावं श्रावं तेषाम् अनुयायि-वर्गे साहसिक्यम् अधर्म-प्रतिरोध-प्रवणः समुत्साहश्च प्रतिदिनं पोषम् अवाप। परमार्थतम् नु, श्रीगुरुनानक-भगवत्-पादैर् यत् सर्व-मनुष्याणां समानत्वं समादरणीयत्वं च उपदिष्टम्, तदर्थं च यो नूतनः सम्प्रदायः प्रतिष्ठापितः, तस्मिन्नेव ईश्वरस्य जागरणस्य

बीजं सन्निहितम् अभूत्। आद्य-श्रीगुरुचरणास् तदानीन्तन-हिन्दु-समाजस्य दोषान् हीना-ऽवस्थां च आत्म-बलेन सम्यग् अबुध्यन्त। जनताया ऊर्ध्व-क्षयकारिणीनां धार्मिक-सामाजिक-कुरीतीनां निवारणं तस्याम् अन्याया-ऽत्याचार-विरोध-क्षमस्य बलस्य आधानं च आद्य-श्रीगुरुचरणानां परमम् इष्टम् अभूत्। इदं तथ्यं तेषाम् उपदेशेभ्यश् चरिताच्च व्यक्तम्। श्रीगुरुनानक-भगवत्-पादा मानव-दुःख-मोचनस्य यत् कार्य-बीजं स्व-भक्त-जन-मानस-क्षेत्रे अवपन् यच्च पञ्चम-नानक-श्रीपूज्या-ऽर्जुन-भगवत्-पादा धर्म-वीर-गति-प्राप्ति-जलेन असिञ्चन् तस्यैव अङ्कुरः श्रीहरगोविन्द-भगवत्-पादैर् अनुमतो गत्यन्तरा-ऽभावे आत्म-रक्षार्थं कृपाण-ग्रहणस्य सिद्धान्तो बभूव।

अथ अवरङ्गज़ेबेन स्व-पितुर् अधिकाराद् राज-सिंहासने छलाद् बलाच्च अपहृते कालः पापीयान् अभवत्। तथाहि, रूढि-ग्रस्त-मानसस्य अनुदार-चेतसोऽवरङ्ज़ेबस्य चिरन्तन एको मनोरथः 'मम राज्यं केवल-माहम्मदीय-जन-निवास-भूमिर् भूयात्।' इत्येवंरूप आसीत्। यावज्जीवं स एतत्पूर्त्यै अयतत। तद्-यथा, गुर्जर-राष्ट्र-क्षत्रप-पदम् अधितिष्ठता तेन तत्र अनेके देवालया भूसात् कारिताः, अहमदाबादे च चिन्तामना-ऽऽख्ये देवालये पूर्वं गावो घातिताः, तदनन्तरं च तं देवालयं भञ्जयित्वा तस्य स्थाने मस्जिद् निर्मापिता। निर्दोष जन-वध-जात-रुधिर-नदीं क्रान्त्वा असौ राज-सिंहासनम् अपजहार; सिंहासनात् च्यावयित्वा पितरं बन्दिनं क्षुत्-क्षामं च विधाय पञ्चत्वं निनाय, भ्रातृंश्च एकैकशो लोका-ऽन्तराय प्रजिघाय।

एतेषां दुष्कर्मणां स्मृतिस् तन्मानसे दुर्धरा भूत्वा तस्य धर्मोन्मादम् उग्रतरं चकार; स च उग्रतरो धर्मोन्मादस् तं हिन्दु-प्रजानाम् अहिताय पापिष्ठाय मार्गाय नुनोद। "एवं-रूपां राज-नीतिम् अनुसृत्य अहं धर्म-कठोराणां माहम्मदीय-लोकानां मनांसि रञ्जयिष्यामि, राज-सिंहासन-प्राप्तये च यानि अवद्यानि कर्माणि अकार्षम् तेषां दुष्कर्मणां स्मृतिस् तेषां हृदयेभ्यश् च्यावयिष्यामि।" इति धिया असौ नृपः सन्नपि अनृपोचितेन पथा प्रस्थातुं प्रारब्धः। आद्य-दश-वर्ष-पर्यन्तं स न किमपि हिन्दु-प्रपीडनं विजुगुप्सितं कर्म कर्त्तुम् अपारयत्। एकोनसप्तत्युत्तर-षोडश शत-तमे (१६६९) स्त्रीष्टाब्दे, पुनः, तेन सर्वेभ्यः प्रादेशिक-राज-प्रतिनिधिभ्य आदेशः कृतः :—"माहम्मदीयेतर-सर्व-लोकानां विद्यालयान् देवालयांश्च सोत्साहं विध्वंसयत, तेषां धर्मोपदेशान् धर्म-कर्माणि च सर्वथा निरुन्ध।" इति। ततः 'सोमनाथ'-पुरस्थं द्वितीयं सोमनाथ-मन्दिरम्, काशीस्थं विश्वनाथ-मन्दिरम्, मथुरास्थं केशवराय-मन्दिरम्, अन्यानि च कतिपयानि प्रख्यातानि हिन्दु धर्ममन्दिराणि भूसाद् अक्रियन्त। अपि च, तेन 'राजपुत्र'-वर्जं सर्वेषां हिन्दूनां शिविका-ऽऽरोहणम्, गजा-ऽऽरोहणम्, सुजातीया-ऽश्वा-ऽऽरोहणम्, शास्त्र-धारणं च निषिद्धम्। १६७९ तमे स्त्रीष्टाब्दे तेन आदेशः कृतः :—"माहम्मदीये राज्ये निवास-हेतोर् अमाहम्मदीयाभिः सर्वाभिः प्रजाभिः सम्राजे 'जज़िया'-नाम-करः प्रदेयः।" इति। वस्तुतस्तु दक्षिणापथे सञ्जातेषु तस्य विग्रहेषु महतो धन-व्ययस्य कारणाद्

राज कोपः क्षीणः; तस्य पुनः पूर्तये हिन्दूनां भृशा-ऽपमानकरः करोऽयम् उत्थाप्यते स्म। अथ च, ये नाम निःस्वा अमाहम्मदीय-लोका एतं कर दातुम् अशक्ताः, ते माहम्मदीय-धर्मम् अगृह्णन्। एवं करोऽयं माहम्मदीय-धर्म प्रसारस्य साधनताम् अपि अगच्छत्—'आम्राश्च सिक्ताः पितरश्च तृप्ताः।'

स्व साम्राज्ये माहम्मदीय धर्म-वर्जं सर्व-धर्माणां लोपम् इच्छन् अवरङ्गज़ेबो बलाद् हिन्दून् माहम्मदीय-धर्मम् अग्राहयत्। अथ हिन्दुषु काश्मीरिका ब्राह्मणा महापण्डिताः; तेषां माहम्मदीय-धर्म-प्रवेशे जाते भारतीय-हिन्दु-जनताया माहम्मदीय-धर्म-प्रवेशः सुकरः।' इति तर्कयता अवरङ्गज़ेबेन बलाद् माहम्मदीयी-करणं काश्मीरेषु प्रारब्धम्। तस्य आदेशाद् इफ़तिख़ारख़ानो नाम काश्मीर-क्षत्रपः कृपाण-बलेन काश्मीरिकान् पण्डितान् माहम्मदीय-धर्मं ग्राहयामास। माहम्मदीयै राज-पुरुषैर् एवं परिपीड्यमाना अगतिकाः काश्मीरिका हिन्दवः श्रीगुरुतेगबहादुर-भगवत्-पादान् स्व-कष्ट-निवारकान् अवधार्य स्व-प्रतिनिधीन् आनन्दपुराय प्राहिण्वन्।

श्रीगुरुचरणान् उपेत्य तैः काश्मीरिक-पण्डितैर् निवेदितम्:—"भवन्त एव भगवदादेशेन धर्मस्य परित्रातारः। यथा भवद्भ्यो रोचते, यथा वा भवन्तः साधु मन्यन्ते तथा अस्माकं धर्मं द्विपद्भिः क्रियमाणाया अवहेलनातः परित्रायन्ताम्।" इति। तेषाम् अभ्यर्थनां श्रुत्वा श्रीगुरुचरणेषु चिन्ता-परायणतया आसीनेषु क्रीडा-सहचरैः परिवृतः बाल-गोविन्दसिंहो दैवात् तत्र प्राप्तः, पितृ-पादान्

चिन्ता-ऽऽकुलान् अवलोक्य च तान् तच्चिन्ता-हेतुम् अपृच्छत्। श्रीगुरुचरणैः प्रत्युक्तम् :—"धर्मः पीड्यते। आततायिनां दुष्कर्मणां सीमा न वर्तते। कोऽपि महात्मा एव आत्मनो बलिं दत्त्वा पृथिव्याः पाप-भारं हर्तुं प्रभवेत् नाम।" इति। तच्छ्रुत्वा निर्व्याज-मधुरेण स्वरेण गोविन्दसिंह उक्तवान् :—"अथ को नाम भवदितर ईदृशस्य उदात्त-त्यागस्य योग्यः!" इति।

'आत्मनो जीवितं बलिं कृत्वा धर्मं रक्षेयम्।' इति-स्व-मनीषितस्य समर्थकं सप्त-वर्षदेशीयस्य स्व-पुत्रस्य वीरोचितं सहसोदितं तादृशं वचनं निशम्य प्रहृष्यन्तः श्रीगुरुचरणा अभ्यागतान् काश्मीरिकान् पण्डितान् सम्बोध्य ऊचुः :—"गम्यताम्, दिल्लीपतिश् च उच्यताम्—'गुरुतेग़बहादुरो माहम्मदीय-धर्मम् अङ्गी-करोति चेत्, वयं सर्वे सानन्दं तथा करिष्यामः।' इति।" इति।

अथ आत्मानं बलिं कृत्वा अवरङ्ग़ज़ेबस्य मनोरथं विफलयितुं श्रीगुरुतेग़बहादुर-भगवत्-पादाः १६७२ तमस्य खीष्टाब्दस्य ग्रीष्मे राजधान्यै प्रस्थातुम् असज्जन्त। धर्म-वीर-गति-प्राप्त्या नाथमानास् ते आत्मनः कुटुम्बं भक्तान् सिक्खांश् च आपृच्छ्य आगरा-नगराय प्रतस्थिरे। बहुभिर् भक्तैर् अनुगतास् ते तत्र तत्र विश्राम्यन्तः, दर्शनार्थम् आगतान् धर्म-प्रियान् लोकान् शुभाऽऽशीर्भिर् योजयन्तः, श्रद्धावद्भिर् आनीता उपदाः स्वी-कुर्वन्तः, यमुनां पश्चिमेन 'राजस्थान' त उत्तरेण मालव-प्रभृति-प्रदेशेषु विशेषेण भ्राम्यन्तः शनैः शनैर् अग्रे प्रासर्पन्। एतासु यात्रासु प्रतिदिनं लोका-ऽनुग्रह-काङ्क्षया धर्मं

व्याचक्षाणास् तेऽवोचन्ः—"सर्वोऽपि लोकः स्व-धर्मम् अनुसर्तुम्, वैयष्टिक-जीवन-व्यापारांश् च सम्पादयितुं स्व-तन्त्रः। तस्य धर्मे वैयष्टिके स्वातन्त्र्ये च शासकैः कृतो हस्त-क्षेपो विगर्ह्यः, निःशङ्कं सोत्साहं च सर्वैर् विरोद्धव्यः।" इति। 'मा भैषीः। मा बीभिषः।' इत्येतत् तेषाम् उपदेशस्य सारम्। तेषां यात्राया विशिष्टे प्रयोजने सत्यपि लोक-सेवा-कर्मसु तत्-प्राणतया अनुप्रविष्टः, आध्यात्मिकः, विश्वजनीनः, यो धर्मांशः स न कदापि तैस् तस्य प्रधान-पदाद् विच्यावितः। तस्माद् एव आसां यात्राणां काले पटियाला-समीपं सैफ़ाबाद-ग्राम-वास्तव्यः सैफ़ुद्दीनः, 'समाना'-सन्निकटे गढ़ी-ग्राम-वासी पठानश्च एकः इति द्वौ माहम्मदीयौ सिक्ख-धर्मं स्वी-कृतवन्तौ।

श्रीगुरुचरणेषु आगरा-परिसरं प्राप्तेषु अवरङ्गजेबस्य शासनेन राज-पुरुषास् तान् निगृह्य दिल्लीम् अनयन्। "यावद् अयं माहम्मदीयं धर्मं स्वी-कर्तुं प्रस्तुतो न भवति तावद् निगडित-कर-चरणस् तिष्ठतु, तास् ता बन्दि-गृह-पीडाश्च अनुभवतु।" इति दिल्लीश्वरस्य शासनं तस्य कर्मचारिभिर् अक्षरशः पालितम्। भगवद्-भजने निमग्नाः श्रीगुरुचरणास् तु शासकैः कारिताः शारीरिकीः पीडा, तैर् एव दर्शितं विविध-भोग-विलोभनं च तृणाय अमन्यन्त। अथ स्व-कृतान् तांस् तान् प्रयत्नान् वन्ध्यान् वीक्ष्य शासकाः श्रीगुरुचरणान् अब्रुवन्ः—"स्व-धर्मस्य ईश्वरीयत्वं साधयितुं मनुष्येण कर्तुम् अशक्यं किमपि कौतुकं कुरु।" इति। "ईश्वरेच्छया घटमानासु प्रकृति-क्रियासु पुरुषस्य हस्त-क्षेपो न युक्तः। किञ्च,

एवंविधानां कौतुककारिणां नराणां कौतुकानि परमेश्वरस्य प्रजानां लज्जा-जनकानि भवेयुः।" इत्यभिधाय श्रीगुरुचरणैस् तेषां वचनं प्रतिषिद्धम्।

१६७५ तमे खीष्टाब्दे नवम्बर मासस्य प्रथम दिवसेषु श्रीगुरुचरणानां वधाय सम्राज आदेशो दिल्ली प्राप्तः। "मया भौतिके शरीरे परित्यक्ते गोविन्दसिंहो यदा गुरु-पीठम् आरोहति तदा सर्वम् इदं तस्य उपनीयताम्।" इति सन्दिश्य श्रीगुरुचरणैः, सम्राज आदेशस्य आगमनात् प्रागेव, पञ्चभिः पणकैः सहितं नारिकेल-फलम् एकं यथा-कथञ्चित् यस्य-कस्यचित् सिक्खस्य हस्तेन आनन्दपुराय प्राहीयत।

अथ श्रीगुरुतेग़बहादुर-भगवत्-पादानां पीडाकारिणः शासनाधिकारिणोऽमानवीयं दन्दशूकत्वं पिशुनयितुं प्रारभन्त। ते श्रीगुरुचरण-भक्तं भाई-मतिदासं द्वयो स्तम्भयोर् मध्ये अबध्नन्, तस्य देहं च क्रकचेन, शिरस्त आरभ्य, द्विधा अकृन्तन्। अपि च, ते भाई-दयाला-नामानम्, एकम् अन्यं सिक्खम्, वह्नेर् उपरि प्रतप्यमानेन जलेन पूर्णे कटाहे अक्षिपन्, तस्य त्वचं च अकुष्णन्। १६७५ तमे खीष्टाब्दे, नवम्बर-मासस्य एकादशे दिवसे, अपराह्णे, चाँदनी-चौक-नाम्न्यां दिल्ली-विपण्यां, सर्व-लोक समक्षं, श्रीगुरुतेग़बहादुर-भगवत् पादानां शिरोऽच्छिद्यत। वध्या-पुरुषेण वधार्थम् उद्गूर्ण खड्गं स्व-शिरसि पतिष्यन्तम् अवलोक्य अपि श्रीगुरुचरणा यद् असामान्यं मनसः स्थैर्यम् अधारयन् तद् दृष्ट्वा वध्या-पुरुषोऽपि स्तम्भोऽभवत्। श्रीगुरुतेग़बहादुर-भगवत्-पादानां

वधो भारतस्य इतिहासेऽविस्मार्यो राष्ट्रिय-भू-कम्पः किल बभूव। श्रीगुरुगोविन्दसिंह भगवत् पादा इदं वृत्तं 'विचित्र नाटके' इत्थम् अवर्णयन् :—

"श्रीगुरुतेगबहादुर-पूज्य-पादा हिन्दूनां तिलकस्य च यज्ञोपवीतस्य च रक्षका अभूवन्।

ते कलि युगे किमपि लोकोत्तरम् अद्भुत कर्म अकुर्वन्।

धर्मा ऽनुरागिणां हिताय ते परमं त्यागं कृतवन्तः।

तैः शिरो दत्तम्, न 'हा'।

धर्मस्य रक्षणाय तैर् इदं कर्म कृतम्।

ते प्राणान् परित्यक्तवन्तः, न सङ्कल्पम्।

देह वस्त्रं दिल्ली-पतये दत्त्वा ते आत्म-लोकं गताः।

न केनचिद् अपरेण मर्त्येण तथा दुष्करं कृतं यथा तैः।

श्रीगुरुतेगबहादुर पूज्य-पादेषु पर-लोक गतेषु अथ सर्वो लोको विलपितवान्;

शोकोद्भूतेन रुदितेन मर्त्य-लोको व्याप्तः;

देव-लोकस्तु देवानां श्रीगुरु प्रशस्ति-वचनैर् अगुञ्जत्।" इति।

शासना-ऽधिकृताः पुरुषाः श्रीगुरुतेगबहादुर-भगवत् पादानां विरूपीभूतं शव चाँदनी-चौकेऽत्यजन्। न कोऽपि रक्षा-दृशा तस्य अवेक्षक आसीत्। मुगल-रोष-भयाद् न कोऽपि श्रीगुरुचरणानां बन्धुर् भूत्वा तेषां शवस्य ग्रहणे साहसम् अधारयत्। सूर्या-ऽस्त-काले प्रभञ्जनः वातुम् आरभत। तज्जनितेऽन्धकारे रङ्घरेत-नाम्न्यां हीन-जात्याम् उत्पन्नः, जैतनामा कश्चित् सिक्खः श्रीगुरुचरणानां

शिर उत्थाप्य—पवित्रतमेन किन्तु भूयिष्ठ-शोकप्रदेन अनेन निधिना सह—आनन्दपुराय प्रस्थितः, अत्याहितमयी च यात्रां यथाशक्यम् अल्पिष्ठेन कालेन समाप्तवान्। 'लुबाना'-जातीयः कश्चिद् आपणिकः श्रीगुरुचरणानां कबन्धं शकटे निधाय तूलेन परितः प्रच्छाद्य च स्व-गृहं निनाय। 'लोक-समक्षं कृतः श्रीगुरु-शव-दाहः सम्राजः कोपम् उद्बोधयेद्।' इति शासक-भिया स धर्म-वीर गतिं प्राप्तानां श्रीगुरुचरणानां कबन्धं वह्निसात् कर्त्तु तत्-सहितं स्व-गृहम् एव अदहत्। अद्यत्वे दिल्ल्यां तद्-गृह स्थाने 'सीसगंज-गुरुद्वारा', शिरश्छेद-स्थाने च 'सीसगंज गुरुद्वारा' इति द्वे सिक्ख-धर्म मन्दिरे औरङ्गज़ेब-शासनेतिहासस्य करुणतमम् अध्याय-विशेषं दिवानिशं वाचयती इव अवतिष्ठेते।

---

# [ ४ ]

# आनन्दपुरे प्राण-तत्त्वस्य विशिष्ट-रूपता-ऽऽपादनम्

कवन्धात् पृथक् कृतं श्रीगुरुतेगबहादुर-भगवत्-पादानां शिर आनन्दपुरम्—तैर् एव निर्मापितं तेषां च प्रियं नगरम्—प्राप्तम्। किं नाम तद् अवलोक्य परितः स्थितानां शिलोच्चयानाम् अपि पाषाण-हृदयानि न द्रवी-भूतानि ! श्रीगुरुचरणानां जननी, पत्नी, भक्ताः सिक्खाश् च शोका-ऽऽवेगेन धृतिं बद्धुं न अशक्नुवन्। दश-वर्षीयस्य गोविन्दसिंहस्य विषादा-ऽतिशयवद् मनः-स्थैर्यम् अपि शब्दैर् वर्णयितुम् अशक्यम्। तदानीम् असौ स्वयं सर्व-वृत्त-निर्देशकोऽभवत्। सर्व-प्रथमम् असौ जैतं सस्नेहम् आलिङ्ग्य तस्य गुरु-भक्तिं साहसं च प्राशंसत्। ततः 'रङ्घरेटा गुरु का बेटा' (रङ्घरेट-वंशो गुरु-वंशः) इति व्याहृत्य स तस्य जात्याः समाज-स्थितिम् उन्निनाय।

'दिल्ल्यां श्रीगुरुचरणानां धर्म-वीर-गति-प्राप्ति-काले बहुषु सिक्खेषु सन्निहितेषु अपि न कश्चित् सिक्खः श्रीगुरुचरणानां शवम् आत्मसात् कर्तुम् उत्सहते स्म।' इति सखेदम् अवगत्य, तस्मिन् एव शोका-ऽवसरे, किशोर-गोविन्दसिंहः सिक्खान् जना-ऽन्तरेभ्यो वेषेण रूपेण मनसा च व्यतिरेचयितुं तेषां विशिष्ट-रूपता-ऽऽपादनाय अविचलं सङ्कल्पं चकार।

अथ गोविन्दसिंहो मातरं पितामहीं सिक्खांश्च सान्त्वयितुम् अवोचत् :—"ईश्वरस्य यद् इष्टं तदेव श्रीतात-पादैर् अनुष्ठितम्। तैः सर्व-लोक-हित-काम्यया पीडा-सहनस्य क्षान्त्याः प्राण-त्यागस्य च जगति निरुपमं निदर्शनं कृतम्। अतो न तेऽनुशोच्याः। तेषां निमित्तम् ईश्वर-प्रार्थना तु कर्तुम् उचिता। तादृशानां पूर्ण-पुरुषाणां निधने परिदेवितम् अयुक्तम्। ते हि सुर-लोके 'जयन्ति श्रीगुरुपादाः, जयन्ति श्रीगुरुपादाः' इति सुर-स्तुति-वचोभिर् अभिनन्द्यन्ते महीयन्ते च।" इति।

अथ गोविन्दसिंहः स्व-तात-पादानाम् और्ध्वदेहिकानि कर्माणि श्रद्धया यथा-विभवम् अन्वतिष्ठत्। असौ तात-पाद-शीर्षं 'गुलाब'-वासितेन जलेन अभिषिच्य यथा-विधि तत् चन्दन-चितायां न्यधात्, 'जपजी'-प्रस्तावना-'पदानि' अपठत्, चितायां च वह्निं प्रावेशयत्। श्रीगुरु-शिरसि चितायां दह्यमाने सति सिक्ख-भक्त-मण्डली गुरु-वाणीं पठन्ती स्थिता; अन्ये जनाः श्रीगुरुतेगबहादुर-भगवत्-पादानाम् अवदानानि पौन-पुन्येन अवर्णयन्। ततः 'सोहिला' अपठ्यत, अन्त्या प्रार्थना व्यधीयत, 'प्रसादः' च व्यतीर्यत। एवम् अन्त्येष्टिं परिसमाप्य गृहं च अनुप्राप्य गोविन्दसिंहो यथा-विधि गुरु-वाणी-पाठस्य प्रारम्भम् अकारयत, दशभिर् दिवसैर् गुरु-वाणी-पाठे समाप्तिं गते च मुक्त-हस्तं भिक्षा-दानम् आचरत्।

श्रीगुरुतेगबहादुर-भगवत्-पादानां धर्म-वीर-गति-प्राप्त्याः कारणाद् आनन्दपुरं व्याप्ता अवसाद-मूला नीरवता-च्छाया हृदयं स्थिरी कृत्य गोविन्दसिंहेन कृतैः प्रयत्नैः शनैः शनैः सर्वथा

अपसृता। आनन्दपुरं तत् परितः शिलोच्चयाश् च गुरु-वाणी-पाठ-ध्वनिना, वीर-रस-काव्य-गानेन, किशोर-गोविन्दसिंहस्य प्रजात्य-वाजिनः शफ-शब्देश् च पुनर् गुञ्जितुं प्रारभन्त। सैनिकोचिता व्यापाराः क्रीडाश् च द्विगुणेन वेगेन पुनः प्रावर्तन्त। तथाहि, मृगया यात्राः, अहमहमिकया च अश्व-धावनम्, नालिका-ऽस्त्रेण शरेण च लक्ष्य-वेधनम्, एवंविधा अन्ये च कार्य-कलापाः आनन्दपुर-निवासिनां जीवनम्, शरीरम् अन्न-रस इव, व्याप्नुवन्। अथ श्रीगुरुचरणानां भक्ता अनुरागिणश् च "अश्वानाम् आयुधानां च उपायनं श्रीगुरुचरणेभ्यो यथा रोचते न तथा उपायना-ऽन्तरम्।" इति वार्त्तां दूरं प्रसारितवन्तः। तां श्रुत्वा प्रतिदिनम् आनन्दपुरम् आगच्छतां यात्रिकाणां गणैर् एतेषां वस्तूनाम् अक्षय्यो निधिः श्रीगुरुचरणसेवार्थं निष्पादितः। साङ्ग्रामिक्या विद्याया दक्षतायाश् च अर्जने आनन्दपुरीय-लोकस्य निरतिशयौत्सुक्यम् अवलोक्य श्रीगुरुचरण-सम-काल-भवो 'हीरो' नाम कविर् अवोचत्ः—"सिक्ख-शिशुर् उष्णीष बन्धना-ऽभ्यासात् प्राक् खड्ग-वाहनम् अभ्यस्यति।" इति। मुग़ल-शासकानां प्रति सिक्खानां हृदयेषु चिरूढोऽमर्षः शनैः शनैर् अपसरन् स्थितः, तस्य पदं च नूतन-सङ्कल्प-प्रयोजनाभ्यां गृह्यमाणम् अभूत्। एवं नूत्ना संवित्, नूत्ना जातिः, जन्म आपद्यमाना अवर्तिष्ट।

१६७६ तमे ख्रीष्टाब्दे, मार्चमासस्य एकोनत्रिंशे दिवसे, वैशाख-सङ्क्रान्ति-पर्वणि, गोविन्दसिंहस्य गुरु पीठा-ऽऽरोहण-संस्कारो महा-समारोहेण समपद्यत। तस्मिन् अवसरे भारतवर्षस्य

सर्व-दिग्-देशेभ्यः सिक्खा आनन्दपुरे सङ्गताः। नानाविध-वेष-भूषाभिः समलङ्कृतः, मस्तके पुङ्खोपशोभितं मुकुटं धारयन्, गोविन्दसिंहः सभां प्रविष्टः। तस्य मनोहरं रूप-वेषं, लोचन-मार्गेण बहिः प्रतिस्फुरन्तम् अविचलं सङ्कल्पं च वीक्ष्य तत्र सङ्गतः सिक्ख-समाजोऽमाद्यत्, श्रद्धयाऽनुरागेण च तं प्राणमत्। तस्य मस्तके केसर-तिलक-प्रदानात् प्राग् गुरु-वाणीतः 'पदानि' अपठ्यन्त, आशिषश्च अवाचिषत। धर्म-वीर-गति-प्राप्त्याः पूर्वं श्रीगुरुतेगबहादुर-भगवत्-पादैर् दिल्लीतः प्रेषितं पञ्चभिः पणकैः सहितं नारिकेल-फलं, पूर्व-गुरोर् उत्तर-गुरवे उपहारतया, तस्य उपानीयत। 'प्रसादः' व्यतीर्यत। वर्ण-भेदं विस्मृत्य सर्वे सिक्खा गुरोर् भोजन-शालायां सह उपविश्य अन्नम् अगृह्णन्। ततः प्रभृति गोविन्दसिंहः सिक्खानां यथा-विधि मूर्धा-ऽभिषिक्त आध्यात्मिको गुरुः, लौकिकेषु व्यवहारेषु च परमं प्रमाणम् अभूत्।

आनन्दपुरे प्रभुत्वस्य लक्षणा-ऽन्तरम् एका रण-भेरी बभूव। अस्या निर्माणात् प्राक् कतिपयैः सिक्ख-धर्म-प्रादेशिक-प्रचारकैः श्रीगुरुचरणेभ्यो निवेदितम्:—"आनन्दपुरं बिलासपुर-राज्या-ऽन्तर्गतं वर्त्तते। रण-भेर्या वादनं बिलासपुर-नरेशस्य रोषकरं स्यात्।" इति। परं "भेरीं विना मदीया सैन्य-सज्जाऽपूर्णा।" इति युक्त्या तेषां मतम् अस्वी-कृत्य श्रीगुरुचरणा एताम् अकारयन्, 'रणजीतनगाड़ा' (रणञ्जय-भेरी) इति च अस्या नाम अकुर्वन्। समारोहेण यथा-विधि च अस्याः प्रतिष्ठाऽभूत्। 'बलीयान् नर-पुङ्गव एव तस्या हनने समर्थः।' इति कृत्वा श्रीगुरुचरणैः सुपरीक्ष्य तस्या वादने

यो महा-बलधरः सिक्खो नियुक्तस् तेन वाद्यमानायाम् तस्या घन-गर्जन ध्वनः श्रोतारम् अमादयत् । श्रीगुरुगोविन्दसिंह-भगवत्-पादेषु मृगयार्थे निष्क्रामत्सु वा, 'गुरु भोजन-शालायाम् अन्नं सिद्धम्; भोक्तु कालः ।' इति विज्ञपयितुं वा सा अहन्यत । ततः प्रभृति यावदद्य सर्व सिक्ख धर्म मन्दिरेषु भेरी वादनेन भोजन-कालः पिशुन्यते ।

अथ आनन्दपुरे वृत्तस्य वर्त्तमानस्य च प्रवृत्तिर् विलासपुर-नरेश भीमचन्द्रम् अपि प्राप्ता । 'रणञ्जय'-भेर्या' वज्र-निर्घोषेण साध्यमानं कार्य तस्य कुतूहलं च भयं च अजनयत् । स स्व-सचिवम् आहूय आदिशत् :—"गुरुः सिक्खाश् च भेरी-हननेन किं चिकीर्षन्ति ? कुतश् च ते एवं मम राज्ये शान्तिं विघ्नन्ति ?" इति । सचिवो निवेदितवान् :—"न गुरुर् भवतो भवतो राज्यस्य वाऽनिष्टं चिकीर्षति । अचिर पूर्वं निर्मापितया भेर्या सह असौ मृगया-परः कालं गमयति । अथ भवता एकदा आनन्दपुरं गत्वा गुरोः सौहार्दम् अर्जनीम् ।" इति ।

सचिवस्य मतम् अभिनन्द्य, "आनन्दपुर गत्वा गुरुणा सह अस्मन्मेलनस्य व्यवस्थां कुरु ।" इति आदिश्य च भीमचन्द्रेण स्व-सचिव आनन्दपुराय प्रस्थापित. । यथा-योग्यम् आतिथ्येन सत्कृत्य श्रीगुरुचरणैर् भीमचन्द्र-सचिव उक्त :—"गुरोर् द्वार सर्वेषां कृते अपावृतम् । भवतः स्वामिनोऽपि तत्र प्रवेशोऽप्रतिषिद्धः ।" इति ।

समागतं भीमचन्द्र सम्यग् अभिनन्द्य श्रीगुरुचरणाश् चिर

तेन सह समालपन्। आगामिनि प्रभाते तौ महार्घस्य अतिरमणीयस्य च उल्लोचस्य छायायां सङ्गतौ। उल्लोचोऽसौ अफ़ग़ान-देशे 'कुभा'-नगर-वास्तव्येन दुनीचन्द-नाम्ना गुरु-भक्त-सिक्खेन श्रीगुरुचरणेभ्य उपहारी-कृतोऽभूत्। चित्र-पुष्पैः शोभितः सउल्लोच राज्ञो हृदयम् अहरत्। किञ्च, प्राग्ज्योतिषा-ऽधिपतिना रत्नराजेन श्रीगुरुचरणेभ्य उपायनी-कृतं प्रसादीनामानम् अनतितुङ्गं परन्तु सु-प्रशिक्षितं करिणम् अपि विलोक्य राजा भृशं मुमुदे। अथ 'कथं नाम गुरोः सकाशाद् वस्तु-द्वयम् एतद् मयाऽपहर्त्तव्यम्?' इति चिन्तयन् एव स्पर्धा-निगडित-हृदयो राजा गृहं प्रतिनिवृत्तः।

गढ़वाल-प्रदेशाऽन्तर्गत-श्रीनगरा-ऽधिपतेः फतेहशाहस्य तनया भीमचन्द्र-तनयाय अजमेरचन्द्राय वाग्-दत्ताऽभूत्। अजमेरचन्द्रस्य विवाहे प्रत्यासीदति सति भीमचन्द्रेण, स्व-सचिव-मुखेन, श्रीगुरुचरणाः प्रार्थिताः :—"स्व-पुत्रस्य विवाहा-ऽवसरे प्रसादी-नामानं दन्तिनं प्रसाधनोपयोगीनि वस्त्वन्तराणि च प्राप्तुम् इच्छामि।" इति। राज्ञश् छलम् ऊहित्वा श्रीगुरुचरणैः प्रत्युक्तम् :—"भक्तैर् गुरवे उपहृतानि वस्तूनि पुरुषा-ऽन्तर-सेवनाय प्रदातुं न साम्प्रतम्।" इति। श्रीगुरुचरणानाम् एवं नकारात्मकं प्रतिवचनं प्राप्य रुष्टेन भीमचन्द्रेण तेभ्यः पत्रम् एकं प्रहितम्। तत्र लिखितम् :—"मदभिप्रेतो हस्ती यदि न दीयते, तदा सैन्य-बलेन तं हरिष्यामि, भवन्तं च मद्-राज्यतो निष्कालयिष्यामि।" इति। तस्मिन् पत्रे फलम् अदर्शितवति राजा भीमचन्द्र आनन्दपुरम् अभिषेणयितुम् उद्युक्तः, अन्यैः पार्वत्यैर् भूपतिभिश् च "न एतद् अविमृश्यकारित्वं

तव उचितम्, विशेषेण पुत्र-विवाह-प्रसङ्गेन त्वयि तत्-तद्-वस्तु-प्रगुणन-विलोकन-व्यग्रे सति।" इति बोधयित्वा वारितः। तदेवं तदा भीमचन्द्रेण सह श्रीगुरुचरणानां विग्रहो न जातः। पार्वत्या राजानः, पुनः, श्रीगुरुचरणेभ्यश् चिराद् अद्रुह्यन्। हस्तिनम् उल्लेख्य वा निमित्ती-कृत्य जातं मनो-मालिन्यं न तथा विषमकारि अभूद् यथा प्राचीनं वैमनस्यम्। तथाहि, आनन्दपुरे श्रीगुरुचरणानां 'राज'-सभा, गुरोर् भोजन-शालायां चातुर्वर्णिकाणां सहभोजनम् अन्यथा च मिथः सम्मिलनम्, 'नीच-वर्ण्यानाम्' उन्नयनम् इत्यादिकं सर्वं श्रीगुरुचरणा-ऽऽचरणं पार्वत्य-क्षिति-पतीनां सुतराम् असह्यम् आसीत्। अपि च, तेऽचिन्तयन् "मुग़ल-सम्राजः करदातारस् तत्-कृपा-ऽनुजीविनो वयम्। गुरुतेग़बहादुरस्य वीरगति-प्राप्ति-कालाद् आरभ्य मुग़ल-सम्राट् सिक्खान् द्वेष्टि। तस्मात् सिक्खैः सह नः सुहृत्-सम्बन्धोऽनेष्टव्यः।" इति। इत्थं धार्मिक-राजनयिक-हेतु-मूलः सिक्खान् प्रति दुर्हृद्-भावः पार्वत्य-नृपाणां हृदयेषु प्रतिदिनम् अवर्धत।

सिक्ख-समाजस्य श्रेयश्च प्रेयश्च उभयं प्राधान्येन स्व-चिन्ता-विषयी-कृत्य श्रीगुरुगोविन्दसिंह-भगवत्पादा दिनस्य भूयांसं भागं प्रायेण सिक्खानां प्रबोधनेन अगमयन्, अथापि अश्वारोहण-शस्त्रवाहनादि-शारीरिक-कर्मसु काव्य-क्रियासु च पूर्णं कौशलं सम्पादयितुं ते सर्वथा अवहिता अभूवन्। तारुण्या-ऽऽगमा-ऽऽरम्भ-हेतोः साम्प्रतं तेषाम् अङ्ग-यष्टिः सुललिता, अपीवरा, स्फूर्तिमती, ऊर्जस्विनी च आसीत्। तेषां हृदयस्य मार्दवं सङ्कल्पानां च दार्ढ्यं

तेषां विभास्वर-लोचनयोर् मार्गेण वहिः प्रतिस्फुरद् इव विभाति स्म। तेषां विविध-कला-विज्ञानं विज्ञाय कलाविदोऽपि विस्मयम् आगच्छन्। तादृश बहु-विध-कार्य-बहुलां भूरि-श्रम-साध्याम् अपि आह्निकीं चर्यां ते अक्षय्य-प्राण-बलेन निरायासं निरवहन्। ब्राह्मे मुहूर्ते उत्थाय भगवत्-स्मरणम्, ततः प्रभाते नैत्यिकं सिक्ख-धर्म-समागमम् उपेत्य ताऊस-सरोद-प्रभृति-वाद्य-वादनेन अनुगतस्य गुरुवाणी-पाठस्य श्रवणम्, ततो धर्म जिज्ञासूनां विबोधनार्थं धर्म-ग्रन्थांशानां व्याख्यानम्, अथ धर्म-शास्त्र-पुराणादि-ग्रन्था ऽध्ययनम्, वीर-काव्य-पठनम्, शस्त्रा-ऽभ्यासः, शारीरिक-व्यायामः, मल्लोचिताः क्रीडाः, सिक्खैः सह लघु-विषयक उपचार-विवर्जितः संलापः, तेषां जिज्ञासानां समाधानम्, साहाय्यार्थिनां कृते साहाय्यस्य आयोजनम्, एवंविध विशाल-क्षेत्र-व्यापिन्याः सहनिवास व्यवस्थायाः कारणाद् उदयमानानां जीवन-प्रश्नानां विचारणम्, दिनान्ते सायन्तनः सत्-समागमः, सहभोजनम्, रात्रौ चिराय श्रद्धालु-गणैः सह उपवेशनम्, सहोपवेशन-क्षणेषु मुग़ल-सम्राट्-कृतानां हिन्दु-प्रजा पीडन-कर्मणां विचारणम्, पूर्व-गुरूणां तत्-काल-भवानां सिक्खानां च कथानां श्रवणम्। इत्येवंविधा तेषां दैनिकी चर्या बभूव।

श्रीगुरुगोविन्दसिंह-भगवत्-पादा यथा सङ्ग्राम्यासु कलासु क्रियासु च कौशलम् उपार्जयितुम् उत्सुकास् तत् पराश् च अभूवन् तथैव अन्यासु विद्यासु अपि। ते नाना-शस्त्रा-ऽस्त्र-सञ्चालनस्य

शिक्षाया ग्रहणेऽभ्यासे च महान्तम् आयासम् उररी-कृतवन्तः। तस्माद् एव खड्ग-वाहने लक्ष्य-वेधने अश्वारोहणे च न कोऽपि तैः सह तुलाम् आरोढुम् अशक्नोत्। किञ्च, ते संस्कृत-पारसीकी-पंजाबी-व्रज-भाषाणां श्रेष्ठ-ग्रन्थान् सम्यग् अधीतवन्तः। कवि-प्रतिभा च तेषां विलक्षणा आसीत्। तैः स्वल्पेन कालेन यावत् काव्यं प्रणीतम्, पुरुषा-ऽन्तरेण समस्ता-ऽऽयुष्येण अपि तावत् न शक्यम्। तेषां गुरुमुखी-हस्त-लेखश् च सुतरां भव्यः। कतिपयेषु ग्रन्थेषु आदेश-पत्रेषु च—सौभाग्याद् यावदद्य सुरक्षितेषु—उपलभ्यमानानि तेषां 'हस्ता-ऽक्षराणि' तेषां हस्त-लेखस्य निदर्शनं प्रस्तुवन्ति।

१६८४ तमे खीष्टाब्दे प्रणीतं 'वार श्रीभगौती जी की' इत्याख्यम्, 'चंडी दी वार' इत्यपर-नाम्ना विख्यातं च, काव्यं तेषां प्रथमा कृतिः। एषा एव च पंजाबी-भाषायां तेषां प्रधाना रचना। वीर-रसस्य परिपाको रचना-कौशलं च यथा अत्र अवलोक्यते न तथा अन्यासु बह्वीषु पञ्जाबी-काव्य-रचनासु। रामायण-महाभारता-ऽनुकारिणि काव्येऽत्र पौराणिकः सुरा-ऽसुर-सङ्ग्रामो विषयी-कृतः। एतत् काव्यं वीर-रसा-ऽनुगुण-स्वर-लहरी-तरङ्गितैर् उपमा-स्वभावोक्ति-प्रभृत्यलङ्कृति-समुपस्कृतैः पदैः रण-स्थलवर्तिनां योधानां क्रोधोत्साहौ प्रहरण-शिञ्जिता-ऽऽदिकं च पाठकानां श्रोतॄणां च प्रत्यक्षतां नयति। अत्र दुर्गा-स्वरूप-चित्रणं च असाधारणेन प्रयासेन क्रियते। कवेः प्रतिभायाः समुत्साहस्य च बलेन सुधाया दुर्गाया अस्तित्वे पाठकानां हृदयेषु यो दृढः सम्प्रत्यय

उत्पद्यते सो ऽस्या देव्या उत्पत्ति-विषये पौराणिकीषु कथासु लक्ष्यमाणम् असम्भाव्यत्वं प्रसह्य वारयति। काव्यम् इदं तथा ओजोगुण-भूयिष्ठं यथा 'मा नाम अहं रणीयेषु कर्मसु प्रवर्त्तेय।' इति शङ्कमानः 'पञ्चापीयो' लोको न प्रातर् अस्य पठनं श्रवणं वा रोचयति। परं 'निहङ्गाः', अन्ये च वीर-रस-रसिकाः, नियमेन इदं पठन्ति शृण्वन्ति च, अस्य पाठात् श्रवणाच्च आत्मनि वीरत्वोद्बोधनम् अनुभवन्ति।

'अस्याः पाठात् श्रवणाद् वा मदनुयायिनां हृदयेषु वीर-रसस्य सञ्चारोऽस्तु।' इति उद्दिश्य श्रीगुरुगोविन्दसिंह-भगवत्-पादा दैत्यैः सह दुर्गाया युद्धस्य पौराणिकीं कथां स्व-काव्यस्य विषयतया धृतवन्तः। प्रकामं मार्कण्डेय-पुराण-गता दुर्गा-कथा प्रायः साकल्येन अत्र अनुसृता, अथाऽपि अस्य काव्यस्य व्यापकं प्रभविष्णुत्वं रोचिष्णुत्वं च पूर्णेन कवि-कौशलेन अन्तः-प्रवेशिन्या सूक्ष्मेक्षिकया च सृष्टं दुर्गायाश् चरितम् आश्रित्य तिष्ठति, न पुराण-कथा-मात्रम्।

एतच्च कथा-सारम्:—

"मधुकैटभेन दैत्य-विशेषेण सन्त्रासितः पितामह एकदा स्व-मस्तक-प्रस्वेद-बिन्दून् प्रमृज्य जल-निधौ चिक्षेप। तेभ्यो जलन्धरो नाम अपरो दैत्योऽजायत। अथ द्वाभ्यां दैत्याभ्यां क्लेश्यमानः परमेष्ठी ध्याना-ऽवस्थितं भगवन्तं विष्णुं शरणं जगाम। ततस् तयोर् दैत्ययोर् विनाशनाय विष्णोः पार्श्वं विभिद्य अष्ट-भुजा दुर्गा उदपद्यत।"

अथाऽत्र कथा-ऽन्तरम् अपि श्रूयते । तद्-यथा ;—

"उज्जयिनी-पतेर् दुर्गा नाम अभ्रातृका, लावण्यमयी शौर्यमयी च, दुहिता पितरि दिवं गते राज-सिंहासनम् आरुरोह ।"

सा चेयं दुर्गा 'चण्डी-चरित्रे' स्व-काव्ये श्रीगुरुगोविन्दसिंह-भगवत्-पादैर् एवं वर्ण्यते :—

"चन्द्रेणोपमितं तस्या वर्त्तते श्रीमदाननम् ।
दर्शनात् सकृदप्यस्य भूयांस् तापः प्रशाम्यति ॥

लम्बन्ते चिकुरास् तस्या यथा नागाः कपालिनः ।
कमलानां मृगाणां च ह्रियं जनयतोऽक्षिणी ॥

कुटिले च भ्रुवौ तस्याः कार्मुकस्याऽनुकारिके ।
अक्षि-पक्ष्माणि मित्राणि पत्रिणां न हि संशयः ॥

सिंह-मध्य-निभं मध्यं गतिर् गज-गति-समा ।
गिरि-शृङ्गे निवासोऽस्याः सौन्दर्यं लोक-मोहनम् ॥

काञ्चनेन समा तस्या अङ्ग-यष्टिश्च दीप्यते ।
हस्ते बिभर्ति निस्त्रिंशम् आरोहति मृगेश्वरम् ॥

अपरस्मिन् करे तस्या विद्यते युद्ध-कार्मुकम् ।
अश्रान्तं चलमालोक्य जिह्रेति शफरी-कुलम् ॥

नयन-स्निग्धता लज्जां दत्तेऽब्जाय मृगाय च ।
[ओष्ठयो रागमालोक्य पीततामेति पल्लवम् ॥]

नासा ग्रीवा च वाणी च ह्रेपयन्ति यथा-क्रमम् ।
शुक-पोतं कपोतं च मधुपाचं च कोकिलम् ॥

मुक्ता-फला-ऽऽभ-दन्तानां पङ्क्तिं दृष्ट्वा विलज्जितम् ।
दाडिमं न हि शक्नोति शुचः कर्तुं च मस्तकम् ॥

चन्द्र-मरीचयः शुक्ला जाताः शुक्लतराः पुनः ।
यदा ताभिस् तु संस्पृष्टा देव्या दिव्या सिता तनूः ॥

पंजाबी भाषा-निबद्धे 'चंडी दी वार' इत्याख्ये स्व-प्रणीते काव्ये श्रीगुरुगोविन्दसिंह-भगवत्-पादा दुर्गायाः कथाम् एवं वर्णयन्ति :—

"कृत-युगे गते त्रेता-युगे च आगते आदितेयान् पराभूय दैतेया नाकं हस्त-गतं कुर्वन्ति । जगति विष्वग् विक्षोभो वरीवर्ति । कलहोत्पादने कृती नारदः स्वैरं पर्यटति ।

अगतिका अमराः कैलास-निवासिनीं दुर्गाम् अभ्युपयन्ति । देवराजः 'देवि ! दुर्गे ! वयं त्वां शरणं प्रपन्नाः । त्रायस्व अस्मान् ।' इति तां प्रार्थयते । दनुजा-ऽशनं स्व-वाहनं सिंहम् आरुह्य दुर्गा द्राग् दैत्योद्वासनाय प्रतिष्ठते ।

अथ तुमुलं रणं प्रवर्त्तते । ढक्का-निनादैः, शङ्ख-ध्वनैर्, हुङ्कृतिभिर्, गर्जित-बृंहितादिभिश्च व्योम विदीर्यते । विभास्वर-खड्ग-कुन्ता-ऽऽदीनां चाकचिक्यकारिण्या प्रभया भास्वान् अदृश्यतां गच्छति ।

सङ्क्षोभ-भीषणे रणे प्रलम्ब-केशधरा योधा व्यथा-विह्वला भूत्वा, क्षीबा इव, क्षितौ पतन्ति । कुन्तेन कृत्त-कक्षाः शूराः, शाखा-ऽऽश्रित-'जित'–फलानि इव, निष्कम्पाः क्ष्मा-तलम् अधिशेरते, विद्युद्-दाम्ना भुवि पातितान् सौधोर्ध्वखण्डांश्च अनुकुर्वन्ति । असुराः संशप्तका भूत्वा युध्यन्ते; तेषां मध्यात् नैकोऽपि रणा-ऽऽङ्गणात् पलायते । दुर्गा-देव्या अद्भुतेन पराक्रमेण विस्मयम्

आगता दैत्य-वध्वः स्व-विमान-पृष्ठेभ्यो रुधिरा-ऽऽसारं सङ्ग्रामं विलोकयन्ति ।

महा-शूरेषु शत्रुषु मृत्यु-वृष्टिं कुर्वाणः शर्वाणी-मुष्टि-स्थः कृपाणः प्रहर्षेण नृत्यन् इव लक्ष्यते। उदग्रेण रोषेण परीतास् त्रिदश-द्विषः, स्तनन्तः कृष्ण-स्तनयित्नव इव, तां परिवेष्टयन्ति। असुरर्षभो महिषा-ऽसुरः कोप-संरक्त-लोचनो दुर्गा-ऽभिमुखं प्रयाति। दुर्गया, पुनः, स शिरसि तथा तरसा प्रहियते यथा तस्याः खड्गस् तच्छिरस्-त्राणं तं तद्-वाजिनं भूमिं च भित्त्वा भूमिम् अधो गोः शृङ्गं प्राप्नोति। सिंहराजम् आरूढा जगदीश्वरी, कृषीवला-ऽङ्गना दात्रेण शालि-पादपान् इव, दैत्यानां व्यूहान् कृपाणेन लुनाति। परमात्मनोऽनुग्रह-बलेन दुर्गा असुरान् जयति, सुराणां विनष्टं राज्यं च तेभ्यः समर्प्य प्रतिनिवर्त्तते ।

दिविषदां विपदाम् अन्तस् तु तावता न भवति। अथ प्रचण्डाभिर् दैत्य-वाहिनीभिर् अनुयातौ शुम्भ-निशुम्भौ नाम दैत्येन्द्रौ देवान् अभिषेणयतः। देवाः प्रपलायन्ते, दुर्गाम् एव शरणं व्रजन्ति ; सा च पुनस् तेषां परित्राणाय उद्युङ्क्ते ।

दुर्गा, या हि काव्येऽत्र प्रायेण 'चण्डी' इत्यपर-नाम्ना अभिहिता, रण-स्थले स्थितेषु सैन्य-व्यूहेषु, अद्रिषु अशनिर् इव, निपतति। धूम्रलोचना-ऽऽदयो रण-रसिका असुर-वराश् चण्डी-बलं परीक्षितुम् उपक्रमन्ते, तया पुनर् असिना एकैकशः खण्डशः क्रियन्ते। ततः शुम्भः प्रत्यग्रं सैन्य-बलं रणाय प्रहिणोति। चण्डी

भीषणया घाण-चर्पया तेषां बहून् प्रवीरान् संहरते ।

अथ श्रवणवद्विजयो नाम अपरो दैत्यः सुवर्मितेन प्रकुपितेन महता दैत्य-बलेन सहितः सङ्ग्रामम् आगच्छति । तेषां संरावं श्रुत्वा चण्डी पुनर् मृगेन्द्रम् आरोहति, रिपु-दल-संहारिणीं गदां हस्ते बिभर्ति, देवा-ऽनीकेन च अनुगता साम्परायिकाय प्रतिष्ठते । पूर्ववत् तुमुलं युद्धं भवति । अ-मरण-धर्मणः श्रवणवद्विजयस्य शोणित-पृषता यथा यथा भूमिं पतन्ति तथा तथा भूमितो नवा नवा दैत्या उत्पद्यन्ते रणाय च सज्जन्ते । दुर्गा देवाश् च यावतो दैत्यान् व्यापादयन्ति तावद्भ्योऽभ्यधिका दैत्या युगपदेव जायन्ते । कोपा-ऽऽविष्टा दुर्गा कलिं स्मरति । स च तस्या मस्तकाद् वह्नि-शिखावद् आविर्भवति । ततो दुर्गा कलिश् च, उभौ, रक्त-धौताभ्यां खड्गाभ्यां शत्रु-सैन्यानां संहारं वितनुतः । अन्ते, श्रवणवद्विजयः परितो वार्यते । तम् अभितः स्फुरन्त्यः करवालिका नवा-ऽऽगतं वरं द्रष्टुं सङ्गताः कुमार्य इव प्रतीयन्ते । 'श्रवणवद्-विजयस्य असृग्-बिन्दवो भूमौ न पतेयुः ।' इति आशयेन कलिर् दुर्गा-प्रहारेण तस्य शरीरात् क्षरन्तीं रक्त-धारां आपिबति, अन्य-दैत्य-जन्म च वारयति ।

श्रवणवद्विजयस्य निधनं श्रुत्वा शुम्भः सुतरां सन्तप्यते । प्रकुपिता असुराः पुना रणाय सन्नह्यन्ते । अभिषेणयतां तेषां वरूथानां पादान् अधो धरा, वात्या-प्रताडिते वारिधौ नौर् इव, प्रवेपते । रणे दुर्वारणा दुर्गा तु, काष्ठिकः परशुना तरु-स्कन्धान्

इव, खड्गेन सुर-द्विषां कण्ठान् निकृन्तति। प्रधनेषु क्षणं परिश्रान्तिम् अविद्वांसोऽमृतान्धो-रिपु-प्रवीरा अद्य रण-रसं पायं पायं परितृप्ताः सङ्ग्रामाद् अपसर्तुम् अवसरम् मृग्यन्ति। अथ मूलस्थान-नाम-नगराद् एतद्-युद्धार्थम् एव आनायितम् अतिगुरु शरासनं बिभ्रत् जविनं वाजिनं च आरूढो निशुम्भो योद्धुम् आयाति। किन्तु असौ यावत् शर-सन्धानं विधत्ते तावद् दुर्गायाः कृपाणेन कृत्तं तस्य शीर्षं भुवम् आपतति। शुम्भश् चाऽपि तथैव तम् अनु पितृ-पति-पुरं प्रयाति।

एवम् आत्मानम् अनाथी-भवन्तम् अवलोक्य असुरास् तारेण स्वरेण परिदेवितुम् आरभन्ते, अश्वेभ्योऽवतीर्य दुर्गायै 'तव दास्यं गता वयम्।' इति पिशुनयितुं तृणं दन्तेषु धारयन्तश् च पलायन्ते।

दुर्गा देवराजाय तद्-भद्रासनं समर्पयति। 'जयति जयति जगन्माता, विश्व-माता।' इति देव-कृताया दुर्गा-स्तुत्याः घोषेण लोक-त्रयं व्याप्यते।" इति।

अस्य काव्यस्य प्रधानः प्रतिपाद्या-ऽर्थस् तु दुर्गायाः समुत्साहो विजयो यशश् च। दुर्गा च मूर्ता दिव्या शक्तिः, रुष्टिः, प्रतिहिंसा च। एवं सत्यपि सा पुण्यवतां कृते सुत-वत्सला माता शरण्या च।

'चंडी दी वार' इत्याख्ये काव्ये, पुनः, सैव देवी 'दुर्गाशाह, चंडी, देविता, रंड, भवानी, जग-माति, महा-माई' इति नाना-सञ्ज्ञाभिर् उपवर्ण्यते।

'चंडी दी वार' काव्यस्य प्रमुखो विशेषोऽत्र उपनिबद्धः सा-ऽङ्गो वीर रसः। स हि अस्य आत्म भूतः। स च ओजोगुणमयैः पदैः, सुनियोजितैर् उपमा-ऽऽद्यलङ्कारैः, श्रोतॄणां श्रोत्रेषु मादकं रसं स्यन्दयन्तीभिः स्वर-लहरीभिश् च परिपोषम् आनीयते। प्रकामम् काव्यम् इदं न महा-काव्या-ऽऽकारम्, अथाऽपि रूपक-कथा-वस्तुवद् नाना-सन्धिभिः संयुतोऽस्य कथा-प्रबन्धः कुतूहल-वर्धनः, अस्य पद्य-बन्धाः सङ्गीत-लया ऽनुगताः, व्यङ्ग्यतया निबद्धा भावास् तीक्ष्णाः, विषयश् च पाठक-हृदय-व्यापी। एवम् इदं काव्यम् पाठकानां मनसां शैथिल्यं हरति तेषां प्राणेषु च नवं बलं सिञ्चति।

१६८२ तमे ख्रीष्टाब्दे वैशाख-सङ्क्रान्ति-दिवसे सम्पन्नं समागमं द्रष्टुं मूलस्थान-नगराद् आगते सिक्ख-गणे नन्दलाल-गोया-नामधेयः प्रतिभावान् सल्लक्षणोपेत कश्चित् तरुण आसीत्। तस्य पूर्वजा अफ़ग़ान-देशस्य माहम्मदीय-भूपालानाम् अमात्य-पदम् अलङ्कुर्वन्ति स्म। ततः स्व-पूर्वजानां पारसीकी-भाषा-ऽनुरागः परम्परया तम् आगतः। तस्माद् असौ पारसीक्याम् आर्बुदयां च निष्णातः, पारसीक्यां च काव्य-विरचने कुशलोऽभवत्। स स्व-पारसीकी भाषा-कृतिषु अन्यतमां 'बन्दगी-नामा' (स्तुति-ग्रन्थः) इति सञ्ज्ञितां श्रीगुरुचरणेभ्य उपदी-कृतवान्। ताम् उरी-कृत्य प्रसन्नैः श्रीगुरुचरणैर् नन्दलालः प्रशंसितः। तस्य पुस्तकस्य कानिचित् प्रकरणानि पठित्वा श्रीगुरुचरणा अब्रुवन्:—"अस्य ग्रन्थस्य 'ज़िन्दगी-नामा' (जीवन-ग्रन्थः) इत्येषा सञ्ज्ञा समुचिता। ततः प्रभृति स ग्रन्थोऽनयैव सञ्ज्ञया ख्यातिं गतः।

वयस एकोन-विंशति-वर्षेषु गतेषु श्रीगुरुचरणा भिखिआ-नामधेयस्य कस्यचिद् लवपुर-निवासिनः सुन्दरी-नाम्नीं दुहितरम् उपायंसत। रूढिम् उपेक्ष्य तैः परिणयार्थं लवपुर-गमनं प्रतिषिद्धम्। आनन्दपुरं निकषा एकं लघु नगरं निर्माप्य तस्य 'लवपुरम्' इति नाम अक्रियत। श्रीगुरुचरणानां बहवः शिष्याः, वणिजः, आपणिकाश् च तत्र वसतिम् अकार्षुः। स्व-कुटुम्ब-सहितः कन्या-पिता तत्र आगतः। श्रीगुरुचरण-भक्त-जनानां हृदयानि हर्षेण पूरयन् विवाह-संस्कारस् तत्रैव सम्पन्नः।

ना-ऽतिचिर-पूर्वं सिक्ख-सम्प्रदाय-प्रविष्टा ये गुरु-भक्ता आगामिनि वर्षे आनन्दपुरम् आगतास् तेषु अन्यतमस्य सिक्खस्य जीतो-नाम्नी सुता प्राप्त-विवाह-वया अभूत्। तस्याः पिता 'ममाऽऽत्मजा श्रीगुरुचरणैर् उदूढा भूयात्।' इति स्व-मनोरथं प्रकाशयाञ्चकार। अनिच्छद्भिः श्रीगुरुचरणैः स्व-मातुर् आदेशात् तस्याः कन्यायाः पाणिर् गृहीतः। सा, पुनः, १७०१ तमे ख्रीष्टाब्दे दिवं गता। तस्मिन् एव वर्षे रोहतास-वास्तव्यो हरभगवान् नाम कोऽपि गुरु-भक्त-सिक्खः साहिबदीवान-नाम्न्याः स्व-तनयायाः पाणिं श्रीगुरुचरणैः पीडयितुं प्रार्थना-परो बभूव। कन्याया माता-पित्रोर् आग्रहं तस्याश् च 'नाऽहं भवत्-सेवा व्यतिरिक्तं पदार्था-ऽन्तरं कामये।' इति दृढं सङ्कल्पम् आकलय्य तां स्व-सेवा-परायणतया स्वी-चक्रुः। अथ यदा श्रीगुरुचरणैः 'ख़ालसा-संस्था' प्रतिष्ठापिता तदा 'ख़ालसा-माता' इति पुण्येन श्लोकेन योजयित्वा सा तैः सिक्खेषु महा-महनीय-पदम् आरोपिता।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानाम्, 'अजीतसिंह, जुझारसिंह, ज़ोरावरसिंह, फ़तेहसिंह' इति चत्वारः पुत्रा आसन्। तेषां मध्यात् प्रथमः १६८९ तमे ख्रीष्टाब्दे सुन्दरीतो जन्म लेभे, शेषाश् च क्रमेण १६९० तमे, १६९६ तमे, १६९९ तमे च ख्रीष्टाब्दे जीतोजी-गर्भाद् बभूवुः।

---

## [ ५ ]

# अभिनवा काव्य-लक्षणा

मेदिनीप्रकाशो नाम सिरमौर-नरेशः श्रीगुरुचरणेषु अन्वरज्यत। तस्माद् एव कतिपया-ऽन्य-भूपतिवत् सोऽपि विलासपुरा-ऽवनिपालस्य भीमचन्द्रस्य श्रीगुरुचरणान् प्रति दुर्मनोरथं न अन्वमोदिष्ट। 'यथा मम राज्यं मृगया-योग्यैर् विपुलैर् वन्य-जन्तुभिर् आढ्यम्, तथैव नाहनं नाम मम नगरं शीतलेन वातेन सेवितं परम-रमणीयम्। श्रीगुरुचरणाः कञ्चन कालम् इह निवासेन माम् अनुगृह्णीयुश् चेत् तदा भीमचन्द्रस्य कोपशान्तिः, मम मानोन्नतिः, मत्-प्रतिद्वन्द्विनः श्रीनगर-नरेशस्य फतेहशाहस्य हृदयं च मर्दीयेन प्रतापेन अभिभूतं भवेद्।' इति उत्प्रेक्ष्य स स्व-दूतम् आनन्दपुराय प्रेषितवान्। 'तत्र गन्तुं प्रभवेयं वा न वा।' इत्येवं दोलायमान-मनोभि श्रीगुरुचरणैस् तस्य सन्देशहर उक्तः—"निश्चितं मत्-प्रतिवचनं प्रतीक्षमाणो भवान् कतिपय-दिवसान् इह तिष्ठतु।" इति।

केचित् प्रादेशिक धर्म-प्रचारकाः श्रीगुरुचरणानां तत्र गमनं कञ्चन कालं च तत्र प्रवसनं मनसि समर्थ्य स्वा-ऽभिमतं तेषां जनन्याः समक्षं प्रकाशयामासुः। श्रीगुरुचरणा मातृ-वचनात् तत्र गमनं स्वी-चक्रुः।

१६८६ तमे खीष्टाब्दे, ग्रीष्मर्तौ, आनन्दपुरे पर्याप्त-राक्षि-वर्गं

स्थापयित्वा, 'रणञ्जय'-भेरी-वादनेन स्व-प्रस्थानं सूचयित्वा, कतिपयैर् बन्धुभिः प्रशिक्षितैः सिक्खैश् च अनुगताः श्रीगुरुचरणा 'नाहन'-नगराय प्रस्थिताः। मार्ग-स्थिते कीरतपुरे स्व-पितामहैः श्रीगुरुहरगोविन्द-भगवत्-पादैर् निर्मापितं सिक्ख-धर्ममन्दिरं दृष्ट्वा ते पुनर् अग्रेऽगमन्। तेषु 'नाहन'-नगर-तीरं प्राप्तेषु राजा मेदिनीप्रकाशो नगराद् बहिर् आगत्य तान् अभ्यनन्दत्। अथ तेषु प्रासाद-भवनेषु गृहीता-ऽऽवासेषु सत्सु स तान् तेषां परिजनं च अपूर्वा-ऽऽदरेण असेवत।

राज्ञा मेदिनीप्रकाशेन यथा-राज-विभवं नित्यं परिचर्यमाणा अपि श्रीगुरुचरणा न तत्र बहुतिथ-निवासम् अरोचयन्। एवं दिनेषु गच्छत्सु मृगया-प्रसङ्गेन एकदा यदा ते, 'नाहन'-तः प्रायोऽष्टादश-क्रोशा-ऽन्तरे मेदिनीप्रकाश-राज्या-ऽन्तर्गतम् एव, कालिन्दी-कच्छम् अवतीर्णास् तदा तत्रत्य-प्रकृत्याः सम्मोहनं रूप-लावण्यम् आलोक्य एकपदे तेषाम् 'इहैव निवसेयम्।' इति बलवती मनीषा बभूव। ते तत्-क्षणं तत्र एव विश्रमितुम् अतिष्ठन्। मुहूर्त्ताद् अनन्तरं परमात्मनः स्तुतिं विधाय 'प्रसादं' च वितीर्य ते तत्र एकस्य कोटस्य निर्माणोपक्रमं चक्रुः। अथ तदनुगतैः सिक्खैः, राज-पुरुषैश् च, रात्रिन्दिवं सतत-श्रमेण नचिरात् तस्य निर्माणे परिसमाप्तिं नीते श्रीगुरुचरणास् तत्र वसतिम् अकुर्वन्। तत्रत्य-शोभया विलोभितानां तेषाम् 'अश्वस् तत्र तत्-क्षणं पादं न्यस्तवान्।' इति विचार्य ते तस्य 'पाओन्टा' इति नाम कृतवन्तः।

अत्र व्यतीतः श्रीगुरुगोविन्दसिंह-भगवत्-पादानां वयो-भागो भूयोवरो बभूव। आनन्दपुरीया समग्रा दिन-चर्या अत्र पुनरावर्त्यत। श्रीगुरुचरणा अत्राऽपि दिनस्य भूयांसं भागम् आत्मनोऽनुयायिनां धर्मोपदेशेन साङ्ग्रामिक-प्रशिक्षणेन च अत्यवाहयन्। गृहाद् वहिः कर्त्तुं योग्यासु क्रीडासु तेषां मनो विशेषेण रमते स्म। यथा च तैः स्वयं 'विचित्रनाटके' निर्दिश्यते ते इह काननेषु बहून् सिंहान् ऋक्षान् मृगांश् च जघ्नुः। अत्रैव तैः, पुनः, राष्ट्रा-ऽवस्थाविषये एकाग्रेण मनसा चिरं ध्यायं ध्यायं राष्ट्रोद्धरणस्य महान्ति आभ्युपयिकानि निर्धारितानि। अत्रैव तेषां कवि-प्रतिभा-स्फूर्त्ती उभे वाचा अभिव्यक्तिम् आप्नुताम्। शैल्या उदात्तत्वम्, आध्यात्मिके रहस्येऽभिनिवेशः, प्रतिपाद्या-ऽर्थानां वीर्यवत्त्वं यथा तेषां काव्ये ऽवलोक्यते न तथाऽन्यत्र। 'एवं-करणेन अविनाशी परमपूरुषः स्तुतः स्यात्, निर्वीर्यी-भूतेषु स्व-राष्ट्र-वासिषु च नव-प्राण-बल-सञ्चारः स्यात्।' इति द्व्यंशं प्रयोजनम् उद्दिश्य ते काव्य-प्रणयने प्रवृत्ताः। तेषां काव्य-प्रवृत्तिश् च निरन्तरं तथा एतत्-प्रयोजन-द्विक-प्रवणा अतिष्ठद् यथा कस्याञ्चिद् अपि भाषायां प्रणीताद् अन्यस्मात् कस्माचिदपि काव्याद् भगवतो दर्शनं वा, तादृश-महतः साहसस्य शौर्यस्य च उद्बोधनं वा, तथा याथातथ्येन न सम्भवं यथा श्रीगुरुचरणानां काव्य-कृतिभ्यः। श्रीगुरुचरणैर् अभिनवा—कृपाण-गता—काव्य-रूपकातिशयोक्तिः सृष्टा। ते कृपाणं शक्त्याः अधिष्ठातृ-देवतायाः कालिकायाः स्वयम् अविनाशिनः परम-पूरुषस्य च लाक्षणिकीं सञ्ज्ञां प्रतिपेदिरे। ते

परमेश्वरं 'सर्वलोह—' (खड्ग) इति गुण-वचनेन विशिंषन्ति। वैदेशिकं शासनं भारत-वासिनां बलोत्साहौ आचामत्। 'ईश्वरेच्छया पर-वशंवदतां गता वयं किं कर्तुं क्षमाः!' इति दैन्य-भावश् च तेषां मन्युं, घुणः काष्ठम् इव, जर्जरी-चकार। एवं-भूतस्य भारतीय-लोकस्य उद्धरणाय अभिनवो धर्मः, अभिनवो धर्म-वाणी तावदपेक्ष्यते स्म। एतद् उभयं प्रदातुम् एव श्रीगुरुचरणाः कृपाणगताम् अभिनवां काव्य-लक्षणाम्—काव्य-रूपकातिशयोक्तिम्—प्रतिपाद-याम्बभूवुः। 'विचित्रनाटक'स्य प्रस्तावनायां परमात्मानं कृपाणत्वेन सम्बोध्य ते कथयन्ति :—

"अनुरागेण भक्त्या च वन्दे खड्गं विपावनम्।
अनुकम्पस्व माम्, येन सिद्धमस्तुमदीप्सितम्॥" इति।

अतः परं खड्गो भावोद्रेक-संसिक्तैः रस-भाव-वस्तु-स्वरूपा-ऽनुगुणैः संस्कृत-पदैः स्तूयते। एषां पदानाम् अर्थ-व्यञ्जकता तथा विलक्षणा यथा तद्-बलेन पाठकैः परस्परं सङ्घृष्यमाणानां खड्गानां लया-ऽनुगतः 'खट् खट्' इति शब्दो रंहसा साक्षात् कर्णेषु आपतन् इव अनुभूयते। तद्-यथा :—

खग खंड विहंडं खल दल खंडं अति रण मंडं वर बंडम्।
भुजदंड अखंडं तेज प्रचंडं जोति अमंडं भान-प्रभम्।

सुख सन्त करणं दुर्मति दरणं किलविखहरणं असि सरणम्।
जै जै जग करणं स्रिष्टि उभरण मामा प्रतिपरण जै तेगम्॥

[अग्ने! जेताऽस्मि राष्ट्राणां, पापानां कुल-नाशनः।
रणा-ऽऽङ्गणमुपेतानां धीराणां चाऽस्मि मण्डनः॥

अभञ्ज्यः खलु ते वाहम् त्वं चण्ड-तेजसां निधिः।
सूर्य इव तव ज्योतिश् चाकचिक्यस्य कारकम्॥

नन्दनस् त्वं हि साधूनां, दुर्मतीनां च मर्दनः।
कल्मषाणां च हर्त्ता त्वं, पाहि मां त्वामुपागतम्॥

लोकत्रयस्य कर्त्ता त्वं, गोप्ताऽथ परिपालकः।
असे! जयसि॥]

ततः प्रभृति श्रीगुरुचरणैः कृते भाषा-व्यवहारे 'परमेश्वर' इति 'खड्ग' इति च पदं समानार्थकं जातम्। 'अर्दास'-नाम्न्याः ईश्वर-प्रार्थनायाः आदौ तैर् उच्यते:—

'अथ खड्गं ध्यात्वा गुरु नानकं ध्यायामि… ….।" इति।

परमेश्वरं 'सर्व-लोह' ('खडग')-पदेन व्यपदिशद्भिस् तैः परमेश्वरस्य भक्त-वत्सलत्वं भक्ता-ऽनुग्राहकत्वं च न विस्मृतम्। तैर् विरचितं 'जप साहिब' इत्यभिधं स्तोत्रं भगवद्-गुण-कीर्त्तन-सौष्ठवस्य हेतोर् निरुपमं वर्त्तते। तत्र एकस्मिन् पद्ये ईश्वर एवं स्तूयते:—

"वन्दे खड्गधरं देवं शस्त्रेशं शस्त्रधारिणम्।
गुह्यतमस्य वेत्तारं मातृवल्लोक-वत्सलम्॥"

ते युद्ध-प्रहरणानि परमेश्वरस्य उपलक्षणतया व्यपदिशन्ति, परमेश्वरं च दुरात्मनां दण्डयितृत्वेन, आततायिनां निषूदनत्वेन च कीर्त्तयन्ति। परं न जातुचिद् विस्मरन्ति यद् 'ईश्वरो लोका ऽनुग्राहकः।' इति। इमम् अर्थं विशदयितुं ते तत्रैव परमेश्वरं 'दयानिधिर् दीनबन्धुर् आनन्द-कन्दः' इत्येवं-विधैर् गुण-वचनैर्

विशिषन्ति । एवं धर्म-गुरु-पदं समाजोद्धारका-ऽऽसनं च अलङ्कृतवतां श्रीगुरुगोविन्दसिंह-भगवत्-पादानां दर्शन-शास्त्रीयोऽयम् एव विशेषो यत् तत्र ईश्वरा-ऽनुराग-रण-रागयोः— भक्ति-वीर-रसयोः— एकत्र समवस्थानं विलोक्यते ।

पाओन्टा-ग्राम-वास-काले श्रीगुरुचरणाः प्रातस्तनम् ईश्वर-ध्यानं धर्म-समागमं च परिसमाप्य नियमेन अनुयमुनं सुदूरं भ्रमितुम् अगच्छन्, रमणीयतमे निर्जने स्थाने प्राप्ते च होरा-त्रयं ततोऽप्यधिकं वा तत्रोपविश्य काव्यं व्यरचयन् । 'अकाल-उस्तत' ('नित्य-ब्रह्म-स्तोत्र')-प्रणयन-काले एकदा 'तु ही' ('त्वमेव') इति पदाभ्यां सञ्जातेन आनन्दमयेन समाधिना पर-वशी-कृतास् ते षोडश-होरा-पर्यन्तं समाधिस्था आसत । तत्-स्तोत्र-गते एकस्मिन् पद्ये 'तु ही' इति पद-द्वयं षोडशकृत्व आवृत्तम् ।

'कृष्णावतार'-नामको यः काव्य-ग्रन्थस् तैर् आनन्दपुरे प्रारब्धः, सोऽत्र प्रथमं निर्व्यूढः । सहजया काव्य-विरचन-प्रवृत्त्या प्रेरिताः श्रीगुरुचरणा रामायण-महाभारत-पुराण-प्रभृतिभ्यः प्राचीन-ग्रन्थेभ्यो वीर-रस-प्रधान-काव्योपयोगीनि कथा-ऽन्तराणि उपात्तवन्तः । अस्य प्रयोजकम् तैः स्वयं निगदितम् : 'कृष्णावतार'-काव्य-ग्रन्थस्य उपसंहारे तैर् उक्तम्:— "भगवन् ! धर्म्य-सङ्ग्रामस्य सङ्कीर्तनम् उद्दिश्य भागवतीं कथां हिन्द्या कथितवान् अस्मि ।" इति ।

तत्र हि "अयम् एव मानव-जन्मन उदारोऽर्थवांश च अन्तो

या पवित्रे धर्म्ये सङ्ग्रामे वीर-गति-प्राप्तिः।" इति सिद्धान्त्यते। एकस्मिन् स्तुति-पद्ये ते एवम् ईश्वरं नाथन्ति:—

"विजह्यां जातुचिन्नैव पन्थानं पुण्य-कर्मणाम्।
न द्विपद्भ्यो भयं मे स्याद् गच्छतः समरा-ऽऽङ्गणम्॥

अरातीन् मर्दयित्वाऽथ हरेयं विजय-श्रियम्।
वरं ह्येतं वृणे देव! नो मे प्रियमतः परम्॥

केवलेयं स्पृहा स्वान्ते वर्त्तते मे जगत्-पते!
'सततं त्वां स्तुयामन्ते वीराणां गतिमाप्नुयाम्'॥"

पाओन्टा-ग्राम-निवास-काले एषा एव काव्य-लक्षणा तदनुरूपो जातीय-चारित्र्य-गुणश् च श्रीगुरुचरणैर् असृज्यत अपुष्यत च। एवं पाओन्टा-ग्राम आध्यात्मिकस्य च 'सांस्कृतिकस्य' च पुनर्-जागरणस्य नाभिर् अभूत्।

पाओन्टा-ग्राम निवास-काले श्रीगुरुचरण-विरचिताः काव्य-ग्रन्थाः काव्यीय-गुण-प्रकर्ष हेतोर् अपि विशेषेण अवधेयताम् अर्हन्ति। तदा तत्र यथा तैस् तथा तदाश्रितैर् अन्यैः कविभिर् अपि विपुलं काव्य-वाङ्मयं सृष्टम्। 'पाओन्टा-ग्रामः काव्यस्य समुत्पत्ति-क्षेत्रम्।' इति श्रावं श्रावं बहवः कवयः श्रीगुरुचरणानाम् उपाश्रयं प्राप्ताः। तेषां मध्यतः 'अनिराय-सेनापत-लखन-काँशीराम-सुखदेव प्रमुखा द्वापञ्चाशत् श्रीगुरुचरणेभ्यो भृतिम् आप्नुवन्। विद्योपार्जने ग्रन्थ-प्रणयने च ब्राह्मणैः स्व-हस्ते कृतम् एका-ऽधिकारं खण्डयितुकामैः श्रीगुरुचरणैः पञ्च सिक्खाः

संस्कृतम् अध्येतुं काश्यै प्रेषिताः। एते पञ्च सिक्खाः सिक्ख-धर्मे साहित्य-सृष्टि-विषयकस्य 'निर्मल'-सम्प्रदायस्य संस्थापका अभूवन्। ततः प्रभृति 'विद्या उच्चा-ऽभिजनैः प्राप्या दुर्लभा विभूतिः।' इति प्रवादो मिथ्यात्वं गतः। तथाहि, एकदा 'गुरु-भोजन-शालायां' तत् तत् कर्म कृत्वा ततः प्रतिनिवर्त्तमानः सरल-रूप-वेषः कोऽपि सिक्खः श्रीगुरुचरणानाम् आदेशात्, कस्यचित् पण्डितस्य विरचितां, गुह्यतम-ज्ञान-विषयिणीं 'दोहां' व्याख्यातवान्। स्व-'दोहा'-व्याख्यानम् आकर्ण्य पण्डितस्य स्व-विद्या-गर्वः खर्वतां गतः।

श्रीगुरुचरणानां 'राज-सभा'-कवयो गुरोः (ईश्वरस्य) स्तोत्राणि विविध-नव-रसमयानि काव्यानि च व्यरचयन्, प्राचीन-संस्कृत-ग्रन्थानां 'भाषा-ऽनुवादं' च अकुर्वन्। ते च स्व-परिश्रमस्य विपुलं वेतनम् अलभन्त। तद्-यथा, हंसो नाम कविर् महाभारत-गत-'कर्ण'-पर्वणो 'भाषा'-करणस्य षष्टि-सहस्र-'टका'-वेतनं लब्धवान्। तद् एवं व्रज-पंजाबी-भाषयोर् विशालः साहित्य-सम्पत्ति-सञ्चयोऽभवत्। अथ साहित्योत्पादन-कार्यम् इदम् आनन्दपुरेऽपि प्रावर्त्तिष्ट। 'कियदात्मकं कार्यं निष्पन्नम्।' इति जिज्ञासया श्रीगुरुचरणानाम् आदेशाद् एकदा लिखित-ग्रन्थेषु तुलाम् आरोपितेषु तेषां भार उपञ्चादश-द्रोणैः समोऽभवत्। एषा अशेषा साहित्य-सम्पदा आनन्दपुरे यत्र गृहे सञ्चिता तत् श्रीगुरुचरणानां बहुमतम् अभूत्। तस् च तस्य 'विद्याधर' इति संज्ञा अक्रियत। अथ अवरङ्गजेब-पर्यैपबृंहितैः पार्वतेयैर् नृपतिभिः सह जातात् सङ्ग्रामाद् अनन्तरं श्रीगुरुचरणेषु आनन्दपुराद् निष्क्रान्तेषु सरसा-नाम्न्याम् तटिन्याः

प्रबल-प्रवाहेण कदाचित् स निधिर् विनाशितः। तस्य विनाशात् पंजाबी-वाङ्मयस्य परम्परा-सम्पत्तिर् विनष्टा।

श्रीगुरुगोविन्दसिंह भगवत्-पादानां कृतयः, 'आदि-ग्रन्थ'तो व्यतिरिक्ते, दशमगुरु-प्रणीतत्वाद् 'दशम-ग्रन्थ'-नाम्नि सिक्ख-धर्मग्रन्थे सङ्कलिता विद्यन्ते। तासां कृतीनां मध्यतो द्वे, 'जपसाहिब' इति 'त्वैप्रसादसवैये' ('त्वत्-प्रसाद-सवैये') इति च, सिक्खानाम् आह्निकीषु पञ्च-प्रार्थनासु परिगण्येते। 'जपसाहिब' इति सञ्ज्ञितं स्तोत्रं विविधेषु दशसु छन्दस्सु निबद्धानां प्रायोऽष्ट-शत-पद्यानां सङ्ग्रहोऽस्ति। पाठकस्य अन्तरात्मन उदात्तता-ऽऽपादकत्वात् स्तोत्रम् एतद् असंशयं सर्व-भाषा-स्तोत्राणां प्रथम-श्रेण्यां पदम् अर्हति।

अस्य एकैकम् अक्षरं विविक्तया भक्ति-भावनया आर्द्रं वरीवर्त्ति। अस्य अभिनवा ललित पदा-ऽवली, अलङ्कार-सम्पत्तिः, सस्वर-पाठ-योग्यानाम् ऊर्जस्वलानां छन्दसां वैविध्यस्य हेतोर् निर्झरिणी-जल-धाराम् अनुकुर्वती सङ्गीतमयता च, मधुर-गीति-स्वरा इव, हठात् पाठक-हृदयं हरन्ति। 'अकाल-उस्तत' इति, 'शब्द-हज़ारे' इति 'श्रीमुखवकसवैये' इति च अन्या स्तोत्र-त्रयी वर्त्तते। 'शस्त्र-नाम-माला' इत्यभिधे ग्रन्थे पौराणिकी कथाम् अनुसृत्य लाक्षणिका-ऽर्थेन सहितानि आयुध-नामानि सङ्कलितानि। 'ज्ञान-प्रबोध-ग्रन्थ' इति-नामकस्य प्रकरणस्य खण्ड-विशेषः प्रकृत्यतीतस्य तत्त्वस्य विवरणेन व्यावहारिकं दर्शन-शास्त्रं विवृणोति। 'चौबीस-अवतार' इत्यस्मिन् ग्रन्थे विष्णोश् चतुर्विंशतीनाम्

अवताराणाम् आश्चर्य-कर्माणि वर्ण्यन्ते । खण्ड-द्वया-ऽऽत्मके 'चंडीचरित्र' इत्याख्ये 'वार श्रीभगौती जी की' इत्यभिधे च ग्रन्थे, पुराण-कथा उपेक्ष्य, स्व-रीत्या चण्डी-चरितं चर्चितम् ।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानां सर्वासु कृतिषु तेषां विलक्षणा कवि-प्रतिभा, आध्यात्मिक-रहस्यमयम् अन्तर्-मुखं ज्ञानं च वैशद्येन प्रतिबिम्बित विभाति । अपि च, एताः कृतयः श्रीगुरुचरणानां पुराण-साङ्ख्य-वैशेषिका-ऽऽदिशास्त्र-ज्यौतिष-मानव-मनोविज्ञान-भूगोलोद्भिज्जशास्त्रा-ऽऽयुर्वेद-सङ्ग्रामाऽऽम्नायप्रभृतिषु विद्यासु नदीष्णत्वं प्रमाणयन्ति । श्रीगुरुचरणा अवधी-व्रज-पंजाबी पारसीक्यार्बुदीत्यादि-बहु-भाषा-विद आसन् । तदा प्रायः समस्ते उत्तरापथे काव्य-भाषात्वेन प्रयुज्यमानायां व्रज-भाषायां तैर् बहुतरं काव्यं प्रणीतम् । पंजाबी-भाषा-निबद्धासु तेषां कृतिषु 'वार श्रीभगौती जी की' इत्येषा प्रधाना । रस-भाव-रीति गुणा-ऽलङ्कारा-ऽऽदीनां प्रयोगे तेषां कृतित्वम् अद्वितीयम् । रस-भावा-ऽभिव्यञ्जकानि वस्तु-वाचकानि वा पदानि, अनुकृति-ध्वनयश् च अनायासेन, सहज-सौकर्येण, तेषां हस्तम् आगच्छन् । तेषां काव्य-कृतिषु यथा प्रतिपाद्या-ऽर्थानां सामञ्जस्यं तथैव निर्झराणां निर्बोधा धारा अश्वानां प्लुत-गत्या मनोज्ञं विधावन च प्रत्यक्षी-भवति । तैर् विविधेषु पुरातन च्छन्दस्सु परिगृहीतेषु अपि नवोद्भावितानां छन्दसां प्रयोगोऽपि विस्मयावहः । किञ्च, काव्यस्य अलङ्करणाय सा-ऽभिप्रायत्व सन्धानाय च तैर् विपुला अभिनवा मूर्तीकरणोत्तय उपमाश् च परिकल्पिताः । तेषां रचनासु व्यञ्जकतायाः

प्रबलता, प्रतिस्वन-स्वर-लहरीणां निरन्तरा धारा, लाक्षणिक-पदानां च प्राज्यता पदे पदे प्राप्यते, येन विचिन्वन्तोऽपि न तेषां रचनानां प्रतिमानं लभामहे।

काव्य-विरचनं श्रीगुरुचरणानां न प्रधानं साध्यम् आसीत्। लोकोपकारार्थम् ईश्वरीय-सिद्धान्तानां निरूपणाय, विस्रब्धं स्वयं साक्षात्-कृतां पारमेश्वरीं सत्तां शब्द-बलेन मूर्त्तां विधाय तस्याः प्रतिपादनाय च, तैः काव्यं साधनत्वेन परिगृहीतम्।

काव्य-मुखेन हि ते लोकानां पारस्परिकं सौहार्दं, सानुक्रोशत्वम् आचार-व्यवहारा-ऽनुशासनं च उपदेष्टुम् ऐच्छन्। 'एकं परं ब्रह्म पूजनीयम् उपासनीयं च; न प्रतिमा पूजनीया; अतर्कोपारूढा विश्वासाः परिहर्त्तव्याः; बाह्या-ऽऽचार-विषयकं कर्म-काण्डं च न आस्थेयम्।" इत्येतत् तेषाम् अनुशासनस्य सारम्। ईश्वर-विहितं न्यायं पुनः सर्व-सुलभं विधातुम् एव तैः खड्गः स्तुतो गौरव-पदे च प्रतिष्ठापितः। न जातुचित् खड्गः पर-स्व-हरणस्य वा स्व-प्रयोजन-साधनस्य लक्षणत्वेन वा तेषाम् इष्टः। तेषां मतेन खड्गः सत्यस्य च सद्-गुणानां च रक्षार्थे क्रियमाणस्य धर्म्यस्य वीरोचितस्य कर्मणश् चिह्नं वर्त्तते। अयं हि शौर्यस्य च आत्मा-ऽभिमानस्य च अपि लिङ्गम्, अगतिकतया आत्म-रक्षणार्थं च उद्गूरणीयः। तथा च श्रीगुरुचरणैर् अनुशिष्टम्:—

"रक्षा-हेतोरगत्या तु न्याय्यं खड्गस्य कर्षणम्।" इति।

---

# ईश्वरा-ऽनुकम्पया विजयः

श्रीगुरुगोविन्दसिंह-भगवत्-पादेषु पाओन्टा-ग्रामे निवसत्सु अवरङ्गजेबः सुदूरे महाराष्ट्र-खण्डे दाक्षिणात्यैर् युद्धैस् तथा व्याकुलो बभूव यथा असौ उत्तरापथे वर्त्तमानं वृत्तजातं प्रति ध्यानं दातुं न जातुचिद् गृहीत-क्षणोऽभवत्। अवरङ्गजेब-कर-दातारो हैमवता भूपतिकास् तु श्रीगुरुचरणैः क्रियमाणान् उपदेशान् आत्मनो राज्य-भूमौ तेषां निवासं च सततम् अभ्यद्रुह्यन्।

श्रीनगरा-ऽधिपतेः फतेहशाहस्य दुहितरि भीमचन्द्रस्य तनयेन उद्वूढायां श्रीनगरात् प्रतिनिवर्त्तमानाः पार्वतेया वर-यात्रिका नृपतयः सम्भूय पाओन्टा ग्रामम् अभिययुः। श्रीगुरुचरणान् प्रति तेषाम् इदं विप्रतीपा-ऽऽचरणं सर्वथा निर्हेतुकम् अभूत्। तथा च प्रतिपादितं श्रीगुरुचरणैर् 'विचित्रनाटके' :—"फतेहशाहो नाम राजा कारणेन विना माम् अभ्यक्रुध्यत् मया सह व्यगृह्णाच।" इति। विश्व मङ्गल-मूर्त्तयः श्रीगुरुचरणास् तावत् तेषां नृपाणां हित-काम्यया तेषां मिथो विरोधान् अपि शमयितुम् अयतन्त। तथाहि, तेषाम् एव प्रयत्नैः फतेहशाहस्य तत्-प्रतिपक्षिणा सिरमौर-नृपेण सह पुरातनो विरोधः प्रशान्तः। श्रीगुरुचरणाश् च तस्य दुहितुर् विवाहा-ऽवसरे स्वस्ति-प्रेमोपायनानि प्रेषितवन्तः।

फ़तेहशाहः, पुनः, स्व-जामातृ-जनकस्य नृप-भीमचन्द्रस्य बलवदाग्रहम् अनुरुध्य तानि न ऊरी-कृतवान्, पाओन्टा-ऽभियाने च श्रीगुरुचरण-द्विपद्-गृह्यतां गतः ।

यमुना-योगिनी गिरि-नाम्नी या लघ्वी स्रोतस्विनी पाओन्टा-ग्रामाद् नाऽतिदूरे प्रवहति तां च यमुनां च अन्तरा, पाओन्टातः प्राय एक-योजना-ऽन्तरे, भंगानी-नाम स्थलं वर्त्तते । 'तद् अस्माकं रण्यम्, अकारण-रण-व्यवसितानाम् अरीणां च अ-रण्यम् ।' इति सम्प्रधार्य श्रीगुरुचरणाः स्वल्पेन अपि सिक्ख-चलेन सह तत्र गताः । पाओन्टातो निष्क्रम्य तस्य स्थलस्य रण-क्षेत्री-करणं श्रीगुरुचरणानां सङ्ग्राम्यं दाक्षिण्यं दर्शयति ।

शासन-महाधिकारिभी राज-सेवा-ऽपात्री-कृत्य मुग़ल-बलेभ्यो ऽपसारिताः, श्रीगुरुचरणा-ऽनुरागिणा सय्यद-बुद्धुशाह-नाम्ना माहम्मदीय-महात्मना श्रीगुरुचरण-च्छायां ग्राहिताः, पञ्च-शत-पठान-भटा वैतनिकेषु श्रीगुरुचरण-सेवा-सैनिकेषु प्रवेशं प्राप्य पाओन्टा-ग्रामे न्यवसन् । रणे प्रारप्स्यमाणे अमी सर्वे श्रीगुरुचरण-भक्तिं विस्मृत्य प्रतिपक्षि-पक्षं गताः ।

आत्मनश् चतुर्भिर् आत्मजैः सप्त-शत-भक्तैश् च परिवृतो बुद्धुशाहः श्रीगुरुचरण-सेवार्थं तत्रैव स्थितः ।

अपिच, श्रीगुरुचरणा-ऽनुयायिनो ये 'उदासिनः' आनन्दपुरात् पाओन्टा-ग्रामम् आगच्छन् तेऽपि प्रधन-प्रारम्भात् प्रागेव ततः

पलायिताः । आत्मनः शौर्येण तेषां हरिण-हृदयतायाः प्रायश्चित्तम् इव चिकीर्षन्, महन्त-कृपालुदासो नाम तेषाम् अध्यक्षः केवलम् तत्र समतिष्ठत ।

"अस्मासु गतेषु असांयुगीनैः सैनिक-ब्रुवैर् गुरोः पुरुषैः क्रियमाणो रणा-ऽनुकारो नूनं नो मनो-रञ्जनाय भवेद् ।" इति ब्रुवाणा रणाद् अपसरन्तो ये पठाना गुरु-देयकान् सिक्खान् उपालभन्त, ते धृत-श्रीगुरुचरण-सेवा-ऽचल-सङ्कल्पानाम् अल्पानाम् सिक्खानां धीर-विक्रान्त-कर्माणि वीक्ष्य सुतरां लज्जा-ऽवनता-ऽऽनना बभूवुः । तथाहि, भंगानी-रण-स्थले श्रीगुरुचरण-पक्षे तेषां संगोशाह-जीतमल-गोपालचन्द्र-गंगाराम-महरीचन्द्रेति पञ्च-पितृव्य-पुत्राणां मध्यत एकैक एकैक सैन्य-दलस्य अध्यक्ष-पदम् अध्यतिष्ठत् । उभयोर् युयुत्सु-पक्षयोर् बलेषु अन्योन्यस्य समक्षं समीपं च आगतेषु सहसा तुमुलं भीषणं च रणं प्रारभ्यत । मुग़ल-शासकस्य पठान-भटा अतिरभसेन रयेण च अयुध्यन्त । तन्मध्ये हयातख़ानो नाम कोऽपि सेना-नायको बहूनि घातुका-ऽपसद-कर्माणि चकार । तद् दृष्ट्वा स्थूलं दारवं दण्डम् उद्गूरयन् महन्त-कृपालुदासस् तस्य पुर आययौ तं च युद्धाय आह्वयत । "केवलं लगुडं बिभ्रता 'महन्तेन' सह किं युद्धम् ?" इति विचार्य हयातख़ानो न तस्य वचसे कर्णं दत्तवान् । अथ पुनरपि 'महन्तेन' आहूतः सोऽग्रतो गत्वा कृपाणेन तं प्रहृतवान् । कृपालुदासस् तस्य प्रहारं लगुडेन वारयित्वा आत्मानं ररक्ष । अथ स्व-वाजिनः पर्याणाद् लम्बमानयोः पाद-धान्योः पाद-भारं निक्षिप्य पर्याणाद् उत्थितः सन् 'मत् मिगी

अकाल' इति च उच्चैर् उच्चार्य महन्त-कृपालुदासो दारुमयेन एव दण्डेन हयातखानं शिरसि तथा तरसा प्रहृतवान् यथा तस्य कपालं द्विधा भिन्नम् । वृत्तम् इदं तदनुरूपया उपमया उपस्कृत्य श्रीगुरुचरणैर् 'विचित्रनाटके' इत्थं वर्णितम् :—"कुपितेन महन्त-कृपालुना स्व-दण्ड उद्गूर्णः, हयातखानश् च शिरसि प्रहृतः । श्रीकृष्णेन भिन्नेभ्यो गोपीनां दधि-भाण्डेभ्यो नवनीतम् इव, शत्रोः कपालाद् मज्जा अश्च्योतत । अथ तावत् खड्गधरो नन्दचन्द्रः साम्प्रतं सकोपं प्रासं वाहयितुं आरभत । तस्मिन् निशित-शस्त्रे भग्ने सति 'सोढी'—वंशस्य मानं रक्षितुम् असौ मण्डलाग्रं कोशाद् निश्चकर्ष । ततः कृपालुर्नाम मम मातुलः सरोपं पुरस्ताद् आयासीत् । अराति-शरा-ऽऽसारैर् विक्षत-तनुर् अपि वृहद्-वलोऽसौ अगणितान् तुरङ्गा-ऽऽरूढान् तुरुष्कान् अन्तका-ऽन्तिकं प्राहिणोत् । महा-रण-रसा-ऽऽविष्टो भूत्वा साहवचन्द्रो रक्त-पिपासून् अनल्पान् प्रतिभटान् गतासून् अकार्षीत् । तस्मिन् रणे बहवोऽनुत्तमा महा-वीरा वीर-गतिं प्राप्तवन्तः । कतिपये मरण-भीताः, पुनस्, ततो विद्रुताः । प्रतिपक्षिणः पठान-भटान् स्व-घोटक-खुरैः सङ्क्षोदयन् संगोशाहः ('सङ्ग्राम-पतिः') तत्र सङ्ग्रामे यशस्यैर् वीर-कर्मभिः स्व-नामधेयम् अन्वर्थम् अकार्षीत् ।" इति । हरिचन्द्रा-ऽभिधस्य पार्वतीय-पार्थिव-विशेषस्य वीर्य-कर्माणि प्रशंसितु-कामैः श्रीगुरुचरणैर् उक्तम्—"अवनौ निखात इव अविचलतया स्थितो वीरो हरिचन्द्रो रोप-रभसेन खरतर-शर-वृष्ट्या वर्मितानाम् अपि रिपूणां वर्माणि व्यदारीत् ।" इति ।

जीतमलो नाम श्रीगुरुचरण-पितृव्य-पुत्रो हरिचन्द्रेण सह द्वन्द्व-युद्धे वीर-गतिं जगाम। संगोशाहस् तत्-प्रतिभटो निज़ाबतखानश् च उभौ मिथो द्वन्द्व-युद्धेन दिवं गतौ। अथ श्रीगुरुचरणाः स्व-हयोत्तमम् आरुह्य निबिड-रण-स्थलं प्रययुः, हरिचन्द्रस्य सम्मुखं प्राप्य च तेन सह योद्धुम् आरभन्त। तैः स्वयं 'विचित्रनाटके' स्व-द्वन्द्व-युद्धम् एवम् उपनिबद्धम् :—"कोपा-ऽऽविष्टो हरिचन्द्रः शरेण एकेन मम वाजिनम् अविध्यत्, अपरं च मां लक्ष्यी-कृत्य निरस्तवान्। भक्त-भय-भञ्जनो भगवान् माम् अरक्षत्। हरिचन्द्रेण प्रयुक्तम् अस्त्रं विहायसा गच्छत् मम कर्ण-पालिं स्पृष्ट्वा अग्रेऽगमत्। ततस् तेन प्रहितस् तृतीयो नाराचो मम कटि-बन्धस्य धातुमयं विबन्धनं विभिद्य मम शरीरं प्राप्तः, परं न क्षतकारी अभूत्। तन्नाराचेन एवं मम शरीरे स्पृष्टे विवृद्ध-मन्युर् अहं धनुर् उद्यम्य बाण-वृष्टिं कर्तुं प्रारब्धवान्, तां निर्वर्ण्य च शत्रवः पलायितुं प्रारब्धवन्तः। ततो लक्ष्यं विशोध्य मुक्तेन मम बाणेन तरुणो हरिचन्द्रो हतः। तस्मिन् हते स्व-विजये मन्दोत्साहाः सपत्ना रण-क्षेत्रात् पलायिताः। अविनाशिन्! प्रभो! त्वदनुग्रहेण विजय-लक्ष्मीर् माम् अवृणुत।" इति।

अथ श्रीगुरुचरणै रणेऽमरतां गतेभ्यः संगोशाह-जीतमल-प्रमुखेभ्यः सर्वेभ्यः सिक्खेभ्यः 'स्वस्ति अस्तु वः सर्वेभ्यः।' इति आशीः प्रत्ता। पीरबुद्धुशाहेन आहवेऽद्भुतं पराक्रमं कृत्वा श्रीगुरुचरणेषु निरतिशये श्रद्धा-भक्ती दर्शिते। तस्य द्वौ सुतौ अपि वीर-गतिम् आप्नुताम्। तादृश-परमोदार-चरितः स माहम्मदीय-महात्मा श्रीगुरुचरणैर्

विशेषेण प्रशंसितः। रणे क्षत-शरीरा वीरा यथोचितम् अभिपज्यन्त, अमरतां गतानां च अन्त्येष्टयस् तेषां धर्म-विधानम् अनुविधाय व्यधायिषत।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानाम् अनुवर्त्तिनः सिक्खाः, अनभ्यस्त-रण-मार्गाः सन्तोऽपि, साहसेन कौशलेन च स्व-प्रतिपक्षिणः सुतराम् अतिशेरेते स्म। अस्माद् रणाद् अनन्तरं तेषां हृदयानि स्व-भुज-बल-विश्वासेन पाओन्टा-पार्श्व-पार्वतेय-भुभुजां च हृदयानि तत्-प्रतापेन व्याप्यन्त।

एतद् भंगानी-युद्धम् अष्टाशीत्युत्तर-षोडश-शततमे (१६८८) ख्रीष्टाब्दे सैप्तम्बर-मासस्य द्वाविंशे दिवसे किल अजायत। अथ नचिरात् श्रीगुरुचरणाः 'पाओन्टा'त आनन्दपुरम् अगच्छन्।

'सप्तम-नानक' इत्यभिख्यां गतानां श्रीगुरुहरराय-भगवत्-पादानां पुत्रः, 'बाबा रामरायो' नाम, पारे-यमुनं देहरादून-नाम्नि नगरे निवसति स्म। सोऽयं बाबारामरायः किल अवरङ्ग़ेब-प्रसादनाय सिक्ख-धर्म-ग्रन्थात् पदम् एकम् उज्जहार, एतस्य च पाप्मनो हेतोर् गुरु-पीठा-ऽधिकार-हीनो भूत्वा सिक्ख-नाराशंसीषु यशःप्रतिष्ठातोऽपि विच्युतोऽभवत्। स, पुनः, असाधारणानां गुणानाम् आकरः, अनिर्वचनीयानां शक्तीनाम् आगारम्, तद्-गुण-गण-लुब्धेन स्वयं सम्राजा अवरङ्ग़ेबेन उपहारी-कृताया विपुलाया भू-सम्पदाया निधानम्, अनल्पानां जनानां श्रद्धा-भाजनं च आसीत्। 'नाऽतिदूरे कृत-वासो गुरुगोविन्दसिंहः।'

इति आकर्ण्य स गुरु-दिदृक्षयाऽऽकुली-बभूव, एकदा दत्त-बाचानिकं स्व-पुरुषं च पाओन्टा-ग्रामाय प्रेषितवान्। श्रीगुरुचरणैः सह तत्-प्रथम-सम्मिलन-हर्ष-पुलकित-सर्वा-ऽङ्गो बाबारामरायो नियतेऽस्नेहसि उद्दिष्टं कलिन्दजा-कूलोदेशम् प्राप्य परमा-ऽऽदरेण श्रीगुरुचरणान् ववन्दे। तत्र तौ चिरं सौहार्द-पुरः-सरं मिथः समालपताम्। यत् सत्यं प्रगाढ-माबा-ऽऽर्द्रं तयोः सम्मिलनम् इदम् अभूत्। बाबारामराया-ऽनुजीविन उपमठा-ऽधीशास् तु तादृशं बान्धव-स्नेह-संभृतं तयोः सङ्गमनम् अवलोक्य विक्लवा इव अभूवन्।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानां पाओन्टा-ग्राम-त्यागात् प्रागेव बाबारामरायम् ततुं त्यक्तवान्। तस्मिन् स्वर् याते श्रीगुरुचरणाः पंजाबकौर-नाम्नीं तत्-पत्नीं प्रति सम-दुःख-सुखत्व-भावनां प्रकटयितुं देहरादूनं गताः। अथ कथा-प्रसङ्गेन तया अभिहितम्—"उद्वृत्ता अमी खलु अस्मदुपमठा-ऽधिकृताः स्वैरम् आचरन्ति। दण्डेन ते सतां मार्गं प्रापणीयाः।" इति। तस्या अभ्यर्थनां स्वीकृत्य श्रीगुरुचरणास् तान् आह्वयन्, यथा-ऽपराधं च अदण्डयन्, गुणवतः, पुनः, अनुरूपैः पुरस्कारैः पर्यतोषयन्।

'पाओन्टा-ग्रामः सिरमौर-राज्या-ऽन्तर्गतः, तन्नरेशो मेदिनी-प्रकाशश् च श्रीगुरुचरण-भक्तः खलु आसीद्।' इति कथितचरम्। श्रीगुरुचरणा-ऽनुरागाद् एव मेदिनीप्रकाशो भंगानी-युद्धे ताटस्थ्यम् आलम्बत। अथ "श्रीगुरुचरणाः पाओन्टा-ग्राम-वासम् उज्झित्वा पुनर् आनन्दपुर-वासं चिकीर्षन्ति।" इति उदन्ते मेदिनीप्रकाशस्य श्रुति-पथम् अवतीर्णेऽसौ श्रीगुरुचरणानां प्रस्थान-समये तान्

प्रणन्तुम् आतुरोऽभवत्, स्व-सम्बन्धि-नाना-पार्वत्य-नृपति-भयात् तु तथा कर्त्तुम् अ पारयन् उद्विग्न-मानसोऽतिष्ठत्। तस्य मनो-गतं श्रुत्वा श्रीगुरुचरणाः "न अत्र-भवता अत्र आगमनस्य चिन्ता कार्या।" इति तस्मै वाचनिकं सम्प्रेष्य तस्य चिन्ता-भये निवार्य निभृत-निभृतं पाओन्टात आनन्दपुराय प्रस्थिताः।

सधौरा-लहरपुर-रायपुर-प्रभृति-ग्रामान् उपतिष्ठमानेन मार्गेण श्रीगुरुचरणा आनन्दपुरं प्राप्ताः। सधौरा-ग्रामे तेषां सुहृद्-भक्तः पीर-बुद्धुशाहः स-बहुमानं तान् पर्युपास्त तेषाम् उपदेशांश् च श्रद्धया शुश्राव। रायपुरे तत्रत्या राज्ञी श्रीगुरुचरणान् यथोचितम् अभ्यनन्दत्, आत्मनः पुत्रस्य मङ्गलस्य नाथमाना च तान् आशिषोऽयाचत। "अकृत्त-केशेन सता तेन शस्त्रा-ऽस्त्र-विद्या समुपार्जनीया।" इत्यभिधाय ते, स्व-प्रस्थानात् प्राक्; तस्मै एकं करवालं चर्म च प्रसादी-कृतवन्तः। रायपुरे महा-जनः श्रीगुरु-चरणानां पावन-दर्शनेन सदुपदेशेन च आत्मनो मानव-जन्म सफलम् अमन्यत।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानां पाओन्टा-निवास-काले आनन्दपुरं निष्पौरम् अजनिष्ट,पुनर् नव-योगे च व्यपैक्षिष्ट। अथ तेषु तत्र पुनर् आगतेषु तद्-दर्शनोत्सुकाम् तद्-भक्ता वृन्दशस् तत्र आगन्तुं प्रारभन्त; बहवश् च तत्रैव वसतिम् उररी-चक्रुः।

एवम् आनन्दपुरेण शनैः शनैः पूर्वतनं विशिष्टं रूपं पुनर्

अवाप्तम्। तत्र प्राक्तनी एव प्राण-शक्तिर् भूयोऽपि अभिव्यक्तिम् अगच्छत्, तस्या विविधा धाराश् च विष्वग् भारतवर्षस्य विभिन्नेषु प्रदेशेषु प्रसर्तुं प्रारभन्त।

"आनन्दपुरम् अयो-दुर्गवद् अभेद्यं भवेत्।" इति विचार्य श्रीगुरुचरणैस् तद् अभितश् चत्वारि दुर्गाणि निर्मापितानि, तेषां च आनन्दगढ़, लोहगढ़, केशगढ़, फ़तेहगढ़ इति नामानि कृतानि। तेषु 'आनन्दगढ़' इति सञ्ज्ञकं दुर्गं बृहत्तमं प्रांशु-प्राकार-संयुतं नाना-कूपवद् विपुल-भाण्डा-ऽऽगार-समाढ्यं च अवर्त्तिष्ट।

आनन्दपुरे श्रीगुरुगोविन्दसिंह-भगवत्-पादैर् अनुशिष्यमाणम् अभिनव-दर्शनशास्त्रं निःसत्त्वेषु पार्यन्तिक-पार्वत्य-पृथिवीपतिषु प्रत्यग्र प्राणान् आदध्मौ। "श्रीगुरुगोविन्दसिंह भगवत्-पादा अस्माकं छाया-प्रदा, सुदूरेषु दक्षिणापथ-प्रदेशेषु विग्रह-ग्राह-गृहीतो-ऽवरङ्गज़ेबो नोऽनलम्।" इति विमृश्य कतिपयैः पर्वतीय-क्षिति-पतिभिः सम्राजे राज-भागधेयो न प्रत्तः। तेषां ताम् उद्दण्डताम् आलोक्य मियाँखानो नाम जम्मू-क्षत्रपस् तेषां दण्डनाय आलिफ़खानं स्व-सेनाध्यक्षं प्रजिघाय। कृपालनामा काँगड़ा-नरेशो दयालनामा बिझड्वाल-भूपालश् च युद्धम् अकृत्वैव तदधीनतां गतौ तस्य निवेदितवन्तौ च :—"बिलासपुर-नरेशो भीमचन्द्रश् चेत् पराभूयते, सर्वे पार्वत्य-नरपतयः पराभविष्यन्ते।" इति। एवं विनिवेद्य तौ भीमचन्द्रं जेतुकामम् आलिफ़खानम् अनुजग्मतुः।

श्रीगुरुचरणेषु पाओन्टात आनन्दपुरं प्रत्यागतेषु भीमचन्द्र

आनन्दपुरम् आगच्छत्, सादरं श्रीगुरुचरणान् उपातिष्ठत, तेषां प्रसादं च सम्प्राप्य निर्द्वन्द्वोऽवातिष्ठत। इदानीं तादृशे सङ्कटे समापतिते स साहाय्यार्थी भूत्वा श्रीगुरुचरणान् प्रपन्नः। 'ओम्' इति प्रतिश्रुत्य एकेन प्रवीर-सिक्ख-वरूथेन अनुगम्यमानाः श्रीगुरुचरणाः स्वयं काँगड़ात आग्नेय्यां दिशि प्रायशो योजन-त्रया-ऽन्तरे विपाशाया वामे तटे नादौन-नाम-ग्रामं निकषा, अभिषेणन-मध्ये एव, आलिफ़खानम् अरुन्धन्। ततस् तीक्ष्णं तत्-क्षणं च बला-ऽबल-निर्णयकरं रणम् अभूत्।

श्रीगुरुचरणैर् 'विचित्रनाटके' विचित-पद-क्रमैर् वीर-रस-मयैः पद्यैर् युद्धम् इदं वर्णितम्। तत्र अस्य उपसंहारे तैर् उक्तम्:— "प्रभोर् अनुकम्पया युद्धं क्षिप्रम् अवसितम्। विद्रवत् प्रतिपक्षि-सैन्य-बलं च नदी-जल-धारायां निपातितम्। विद्रावणे प्रारब्धे व्यूह-व्यवस्थासु विध्वस्तासु च स्व-शिबिरस्य चिन्तां विस्मृत्य आलिफ़खानः प्रपलायितः।" इति। आलिफ़खान-पराजयस्य समाचारान् श्रुत्वा अवरङ्गज़ेबः प्रकुपित। श्रीगुरुचरणानां प्रतिदिवसं वर्धमानः प्रतापः, आलिफ़खान-पराजय-करं तेषां शौर्यं च विशेषेण तुरुष्केश्वरस्य रोषा-ऽऽशुशुक्षणिम् अधुक्षयत्। तेन तत्-क्षणं 'पञ्चाप-मुग़ल-शासना-ऽधिकृतेभ्य आदेशः प्रेषितः :—"सिक्खगुरुः सभा-ऽऽयोजनाद् निवारणीयः, तस्य गृहा-ऽऽदिकं ध्वंसयितव्यम्। अथ यदि नाम जातुचिद् अपि गुरुः साधु-मार्गं स्तोकम् अपि जहाति, आत्मनः कृते सिक्खैः 'सच्चापादशाह' (सत्योऽधीश्वरः) इति विशेषण-पदं प्रयोजयति, तदा असौ मम राज्याद्

निर्वासयितव्यः ।" इति । १७९२ तमे खीष्टाब्दे, नवम्बर-मासे, सम्प्रसारितोऽयं साम्राजिक आदेश आनन्दपुरे स्वल्पम् अपि भयं सञ्जनयितुं वा, नवोद्बुद्धम् उत्साहं दमयितुं वा, नाऽलम् अभूत्। अथ श्रीगुरुचरणैर् भारतवर्षस्य विभिन्नेषु प्रदेशेषु निवसद्भ्यः सिक्खेभ्य आदेशः प्रहितः :—"शस्त्रभृतो ऽकृत्त-केश-श्मश्रुकाश्च सन्तः सर्वे वैशाख-सङ्क्रान्ति-पर्वणि आनन्दपुरम् आयात ।" इति ।

श्रीगुरुचरणा-ऽऽदेशम् उपलभ्य नानादिग्-देशेभ्यः सिक्खा आनन्दपुरम् आगन्तुम् आरभन्त। ते न केवलानि यात्रायाः सामान्यानि व्यसनानि, तत्र तत्र ओजायमानैः समुद्धत-मुग़ल-योधैः सामिर्द्धं संस्फोटम् अपि सोढवन्तः। एवं पथिषु परिपन्थिभिः सह तरवारीन् तोलयन्तस् ते श्रीगुरुचरणानां पुरम् आनन्दपुरम् आगच्छन्। १६९४ तमे खीष्टाब्दे, मार्चमासस्य एकोनविंशे दिवसे वैशाख-सङ्क्रान्ति-पर्व महता प्रमोदेन अमान्यत। तदा आनन्दपुरे धर्म-ग्रन्थ-पाठाः, सर्व-सह-भोजनानि, विविधा विनोद-क्रीडाः, सङ्ग्राम्या अहमहमिकामय्यः प्रतियोगवत्यः केल्यः, इति नाना शरीरा-ऽऽत्मोन्नायिन्यः क्रिया अभूवन्। तदा अस्य सिक्ख-समागमस्य सर्वा वार्ता शासना-ऽधिकृतैर् दक्षिणापथम् अधिवसते सम्राजे प्राहीयत। 'गुरुगोविन्दसिंह एव राज-द्रुहां अग्रियः। अग्रे स एव दमनम् अर्हति।' इति तर्कयतोऽवरङ्गज़ेबस्य आज्ञया दिलावरख़ानो नाम काँगड़ा-मुग़ल-शासकः 'गुरुगोविन्दसिंहं दमयित्वा पार्वत्यान् पार्थिवान् अपि दमय।' इति आदिश्य सैन्येन सहितं स्व-तनयम् आलन्दपुरं प्रति प्रस्थापयामास। अस्तोकेन उल्लासेन जवेन च अभिषेणयन् स युवा सैन्य-नायकः 'अतर्कित-पूर्वेण अभ्यवस्कन्दनेन नगर-निवासिनो विस्मापये।' इति विचार्य

इव निशीथे आनन्दपुरं समया समयात्। तस्य सैन्य-बले नदीं तीर्णे सति, यथा श्रीगुरुचरणैर् 'विचित्रनाटके' वर्ण्यते, आलमचन्द्रो नाम श्रीगुरुचरण-दौवारिकस् तान् प्रबोधयामास। तत्-क्षणं प्रेषितस्य सन्देशहरस्य मुखात् श्रीगुरुचरण-सन्देशं श्रावं श्रावं शय्यां परित्यज्य सन्नह्य च सिक्खा द्विपतः प्रति अधाविषुः। 'रणञ्जय'-भेर्याः घन-नादः शूराणां सिंह-नादाश् च शारदे निस्स्वने निशीथे दिशः प्रदिशश् च प्रतिध्वनिना अपूरयन्। तेन 'भूरि-सङ्ख्याकाः सिक्ख-योद्धारः।' इति सिक्ख-सङ्ख्या-सम्बन्धे विभ्रान्ताः, सिक्खान् सहसा अभिनिर्यातश् च अवलोक्य सम्भ्रमं गता अरातय आयोधनम् अकृत्वैव विप्रतिपदं प्रद्रुताः। तथा च, उक्तं श्रीगुरुचरणैर् 'विचित्र-नाटके':—"महायोधः ख़ान-पुत्रः शस्त्राणि अनुद्यम्य एव याम्यां दिशि पलायितः। बला-ऽवष्टब्धोऽहितो रणा-ऽङ्गणा-ऽवतरणाद् भीतः सन् सन्द्रुतः।" इति।

अथ पितरम् उपेत्य ख़ान-पुत्रो यावद् लज्जा-ऽवनत-शिरास् तिष्ठति तावत् तत्-पिता दिलावरख़ानस् तस्य पराभवं मनसा समर्थ्य रोषा-ऽग्निना ऽदह्यत। "सिक्ख-गुरुं दण्डयित्वा अहम् अस्य असांयुगीनस्य यूनो दोषं मार्जयिष्यामि।" इति आश्रुत्य हुसैनख़ानो नाम तस्य सेनापतिः १६९६ तमस्य ख्रीष्टाब्दस्य प्रारम्भ-काले बृहत्तर-सैन्य-बलेन सहित आनन्दपुरा-ऽभियानं प्रारब्धवान्। कैश्चिद् भीरुभिर् भूधर-भूभृद्भिस् तु निर्मृधं तन्निघ्नता मूर्ध्नि धृता। आलिफ़ख़ानेन सह भूत-पूर्वे प्रधने श्रीगुरुचरणा यस्य सहयुध्वान आसन् स राजयुध्वा विलासपुर-नरेशो भीमचन्द्रोऽपि श्रीगुरुचरणच्छायातोऽपसृत्य हुसैनख़ानस्य पुच्छम् आलम्बत।

आनन्दपुरम् अभिगच्छन् हुसैनखानः, पुनः, मध्ये-याग्रम्, अन्येन एव एकेन समर्केन निगडित-पदोऽभूत्। तथाहि, मुग़ल-शासकैर् निर्धारितं प्राज्यं राज-बलि-राशिं दातुम् अनीशो 'गुलेर'-नरपालो गोपालो हुसैनखानेन सह विग्रहीतुम् उदयुङ्क्त। तन्मित्रं 'जसवाल'-भूमिपालो बली रामसिंहस् तत्-पक्ष्योऽभवत्। संगतिया-नामा गुलेर-राज-सभाम् आगतः श्रीगुरुचरण-दूतः, तस्य सहयोगिनः सप्त सिक्खाश् च गुलेर-पक्षिणो भूत्वाऽयुध्यन्त। 'कटोच'-क्ष्मापतिः कृपालः, विलासपुर-पुरन्दरो भीमचन्द्रश् च भूयोऽपि यवना-ऽनुयायिनौ अभवताम्। अथ महति रण-सङ्कुले कृपालो हुसैनखानश् च पञ्चत्वं गतौ। संगतिया-सहिताः सप्त सिक्खा अपि तत्र वीर-गतिं प्राप्नुवन्। गोपालस् तस्य सहकृत्वानश् च समितिञ्जय-कीर्त्तिम् उपार्जयन्। अथ श्रीगुरुचरणेभ्य उपायनानि सम्प्रेष्य, तैः प्रसादी-कृतस्य खड्गस्य हेतोस् तान् प्रति आत्मनो-ऽनुगृहीत-भावं प्रकाश्य च गुलेरपतिर् विजयोत्सवम् अमानयत्।

काँगड़ा-मुग़ल-शासको दिलावरखानः पुनरपि बला-ऽन्तरेण आनन्दपुरम् अभ्यपिपेणत्। किन्तु 'जसवाल-ग्राम-योध-वरो गजसिंह आनन्दपुराद् अवारे एव तं युद्धाय आजुहवे। तदध्यक्षे जुझारसिंह रण-भुवि निपतिते मुग़ल-चलम् अपक्रान्तम्।

अथ पौनःपुन्येन स्व-सैन्य-पराभवम् अवेक्ष्य कोप-परीतेन अवरङ्गज़ेबेन मुअज़्ज़मो नाम ज्येष्ठात्मजः—यम् तस्माद् अनन्तरं बहादुरशाहेतिनाम्ना दिल्ली-सिंहासनम् आरोह—सम्राड्-द्रुहो दण्डयितुं 'पञ्चापाय' प्रेषितः। मुअज़्ज़मः स्वयं स्वपुरे निवासं

कृतवान्, मिर्ज़ाबेगनामानम् एकं सेनापतिं स-सैन्यं शिवालयक-शिलोच्चय-प्रदेशेभ्यः प्रहितवान्। मिर्ज़ाबेगः क्रौर्येण वैरं शोधितवान्, पार्वत्यान् नरपतीश् च पुनर् मुगल-निघ्नताम् आनीतवान्, श्रीगुरुचरणान् प्रति तु न किमपि अप्रियम् आचरितवान्। तत्र हेतुश् च—"श्रीगुरुचरणानां भक्तो भाईनन्दलालो नाम मुगल-युवराज-मुअज़्ज़म-सचिवस् त श्रीगुरुचरणानाम् अप्रिया-ऽऽचरणात् सविनय निवारितवान्। अपरञ्च, अवरङ्गज़ेबे पञ्चत्वं गते राज-सिंहासनस्य कृते बन्धुभिः सह सम्भाव्यमाने भाविनि विरोधे मुअज़्ज़मः स्वयं श्रीगुरुचरणानां सहकारम् उत्प्रेक्षमाणः समतिष्ठत।

एषां युद्धानां विष विकारः, पुनर्, आनन्दपुरेऽपि पीडाकरो-ऽभवत्। तस्मादेव क्रान्तदर्शिभिः श्रीगुरुचरणैर् "अश्वैर् आयोधना-ऽऽयुधैश् च सज्जी-भूय आनन्दपुरम् आगच्छत।" इति सन्देशा-ऽऽदेश-पत्रं स्व भक्तेभ्यः प्रहितम्। पटियाला राज-वंश पूर्वजौ तिलोक-राम-नामधेयौ प्रति प्रेषितं तेषाम् तादृशम् एकं पत्रम् अद्यावधि पटियाला-राज-कुले सुरक्षित वर्त्तते। तस्य पत्रस्य लेखन-कालः १६९६ तमस्य ख्रीष्टाब्दस्य आगस्त-मासः। तत्र हि पत्रे पटियाला-राज-कुलं श्रीगुरुचरणैः स्व कुलतया व्यपदिष्टम्, कुल-प्रमुखौ प्रति च 'स्वा-ऽधिकार वर्तमानैर् अश्वारोहिभिः सहितौ आन्दपुरम् आगच्छतम्।' इति एषा अध्येषणा, कार्यस्य अत्यन्ता-ऽऽवश्यकतां निरूपयद्भिः पदे, असकृत् कृता।

---

## सर्जन-क्षणाः

पार्वतेयान् पार्थिवान् पराभूय मिर्ज़ावेगेन खड्गे कोशस्थी-कृते 'पन्थापे' क्षणिका शान्तिर् अभूत् । तदा न वा मुग़ल-शासकाः, न वा धराधर-धरापतयः श्रीगुरुचरणान् अक्लिश्नन् । अस्मिन् अन्तराले प्राय आनन्दपुरं निकशा नैनादेवी-समाख्यस्य उत्तुङ्ग-शृङ्गवतः शिखरिणि उपत्यकाम् अधिवसतां श्रीगुरुचरणानां कालः काव्येन च ध्यानवन्धेन च व्यतीयाय। स्व-जीवनेतिवृत्तम् अधिकृत्य प्रारब्धम्, 'विचित्रनाटक' इति सञ्ज्ञितं छन्दो-बद्धं रूपकं तैः १६९८ तमे ख्रीष्ट-सम्वत्सरे तत्रैव पूर्त्तिम् अनीयत । अस्मिन् एव च अन्तरे तदाश्रिताः कवयो महाभारत हितोपदेश-चाणक्यनीति-प्रभृतीनां सुप्रतीत-संस्कृत-सन्दर्भाणां भाषा-ऽनुवादम् अकार्षुः । अपि च, एतेषु एव शान्ति-क्षणेषु अजस्रम् अध्यात्म-गुणैर् उत्तिष्ठमानैः, ब्रह्म योगं च अनुतिष्ठद्भिः श्रीगुरुचरणैर् आयति-कुक्षिस्था सङ्कटा-ऽवस्था प्रत्यक्षी-कृता, स्व-बुद्धौ आलोच्यतया परिपच्यमानो नाना-बन्धन-विमोक्षा-ऽभ्युपायो निश्चयप्रचतां नीतः, ईश्वर-निर्दिष्टस्य स्व-जीवन-प्रयोजनस्य सिद्ध्यै अपेक्षिता मानसी सज्जना च निर्व्यूढा ।

सिक्ख-सम्प्रदाया-ऽनुयायि-समाजे समुद्भूतानां दोषाणां प्रमार्जनं तत्-पथस्य प्रथमं सोपानं मत्वा तैस् तावत् तदेव

विधातुम् अध्यवसितम् । सिक्ख-धर्म-समज्यानां यथा-विधि-प्रणयने नेतृ-पदम् आरोपिताः, गुरु-प्रतिनिधितया तत्र तत्र नाना-नगरा-ऽऽदिषु स्थापिताः, 'मसन्द' इति ख्याता उपमठाधीशाः स्व-कर्तव्य-कार्यं व्यस्मरन्, साधु-जन-मार्गम् अत्यजन् भक्त-जनोपतापकृतश् च अभवन् । श्रीगुरुचरणांश् च तत् तद्-ग्रामादि-वास्तव्य-सिक्खांश् च अन्तरा तेषां पदम् अभूत् । एतत् श्रीगुरुचरण्यं पदम् आत्मनीनं कुर्वन्तः, मुग्ध-भक्तानां द्रव्यं निर्दयं हरन्तः, ते स्वार्थम् असाधयन् । तेषाम् असद्-वृत्तताया नाना कथाः श्रीगुरुचरणानां श्रोत्र-पथम् अपि गताः । 'मुग़ल-सम्राड्-रोपकारि किञ्चिदपि कर्तुं नोचितम् ।' इति मन्त्रयमाणाम् ते सर्वदा श्रीगुरुचरणानां पुरतोऽप्रमादितां च कापुरुषतां च इष्टदेवताम् इव अस्तुवन् । अथ ग्रामाद्-ग्रामम् अटतां गीत-नाट्या-ऽऽजीविनां कोऽपि गण एकदा आनन्दपुरम् आगतवान् । तेन उपमठाऽधीश-चरितं व्याजस्तुत्यादि-वक्र-वचो-भङ्गिभिर् विशेषेण मनोरञ्जनी-कृत्य श्रीगुरुचरणानां समक्षं सुनिपुणम् अभिनीतं गीतं च । तौर्यत्रिकिणां गणस्य प्रयोगं प्रेक्ष्य उपमठा-ऽधीश-चरित-विषये श्रीगुरुचरणानां विशयो विशीर्णः, "लोक-क्लेश-कराणां सिक्ख-सम्प्रदाय-बल-हराणाम् एतेषाम् उपमठा-ऽधीशानां पदानि लोपयामि ।" इति विचारश् च बलीयान् अभवत् । अथ ते उपमठा-ऽधीशान् आनन्दपुराय आकारयन्, तेषां मध्यतो दुर्वृत्तान् अदण्डयन् सद्-वृत्तांश् च पारितोपिक-प्रदानेन अतोषयन्, उपमठा-ऽधीश-पदं च अलोपयन् । एवम् उपमठा-ऽधीश-पदे विलुप्ते, मध्यगामिषु अधिकारि-पुरुषेषु निष्क्रान्तेषु, भक्त-लोकस्य आनन्दपुरेण सह साक्षात्-सम्बन्धोऽजायत ।

आनन्दपुरे वैशाख-सङ्क्रान्ति-दिवसः सिक्खानां महा-वार्षिकोत्सवो भवति । तदा तत्र दूर-दिग्-देशेभ्यः समुपेता भक्त-जना मिथः सङ्गच्छन्ते नव-जीवनं च लभन्ते । १६९९ तमे खीष्टाब्दे योऽसौ पर्वोत्सवः समपद्यत तन्माननार्थं ततश् चिरात् पूर्वं विशेषा सज्जा आरभ्यत । तत्र तत्र सर्वत्र सिक्खेभ्य आदेशो गतः :—"अकृत्त-केश-श्मश्रुकाः शस्त्रभृतश् च भूत्वा भूयिष्ठा इह आगच्छत ।" इति । तीर्थ-यात्रिणाम् अभिनन्दनाय सौख्याय सुस्थतायै च आनन्दपुरे भूयसा आयासेन अभूत-पूर्वा सुव्यवस्था व्यधीयत । अन्तरा अन्तरा चिर-कालं श्रीगुरुचरणा योग-ध्यान-निमग्ना अभूवन् । तेषां मुख-मण्डले तत्-कृत-गहन-ध्यान-फलं लोचनयोश् च अलौकिकं ज्योतिर् व्यभात् । "तैः किमपि दुरवगाहम् आन्तरात्मिकं रहस्यम् अन्वभावि ।" इति आवभौ । "नचिरात् किमपि अभूत-पूर्वं भावि ।" इति विमृशताम् आनन्दपुर-पौराणां मुखैर् गभीरा मुद्रा भृता । सर्व-मनोविनोद-व्यापारेषु प्रशान्तेषु तूष्णीकत्वं सर्वत्र परिव्याप्तम् । अथापि न कोऽपि स्व कर्त्तव्य-कार्येषु प्रमत्तः, शिथिलोद्योगो वाऽभवत् । महतीनां घटनानां पूर्वं भाविनी या वस्तु-स्थितिर् भवति सा तदा आनन्दपुरे पर्यलक्ष्यत ।

वैशाख-सङ्क्रान्ति-पर्वणि प्रत्यासीदति सति आनन्दपुरस्य रामणीयकं तीर्थ-यात्रिणां वर्गश आगमनेन वर्धितुम् आरभत । "तीर्थ-यात्रिणाम् अशीतिः सहस्राणि तत्र समागच्छन् ।" इति खलु तदानीन्तनेतिवृत्त-लेखेभ्यो विज्ञायते । पर्व-वासरे—मार्च मासस्य त्रिंशे दिवसे—यथा-नियमं ब्राह्मे मुहूर्ते उत्थाय, ब्रह्म-योगम् उपास्य,

सभा-काला-ऽनुरूपम् आकल्पं क्लृप्त्वा सन्नह्य च श्रीगुरुचरणाः सिक्ख-समज्या-समक्षम् आययुः, समवेत-तार-स्वरेण समज्या-कृतम् अभिवादनं च प्रतिजगृहुः। तदा तत्र सङ्गतो महा-लोक-समवायस् तेषाम् उपदेशाऽमृतं पातुं भृशोत्कोऽस्थात्, श्रीगुरुचरणाः, पुनः, उपदेशम् अनारभ्य, कृपाणं कोशाद् बहिः कृष्टवन्तः श्रोतॄन् सम्बोध्य च प्रोक्तवन्तः :—"अद्य अस्मत्-कृपाणः शिर एकम् जिघृक्षति। ये हि अस्माकं निर्व्याज-भक्ताः सिक्खाः, तेषाम् एकतमः पुरस्ताद् आगच्छतु। अपि न अस्माकं सिक्खानाम् एकतमोऽपि तादृग् भक्तो य आत्मनो जीवितेन गुरुं धर्मं च सेवितुम् उत्सहते!" इति।

तेषां वचो निशम्य सर्वाऽपि सभा एकपदे हृत-चेतना इव जाता। 'वस्तु-तत्त्वे कः खलु श्रीगुरुचरणानां विवक्षितोऽर्थः?' इति ऊहितुम् अक्षमा समस्ता सभा अत्याहितेन जडी-कृता इव शून्य-दृशा श्रीगुरुचरणान् पश्यन्ती स्थिता। अथ तैः पुनरपि तथैव कथितम्। इदानीं तेषां वच आकर्ण्य सभासदां बुद्धि-सङ्क्षोभो मनो-भयतां गतः। अथ तृतीयं वारं श्रीगुरुचरणैर् यथा-पूर्वं स्वा-ऽभिप्रायः प्रकाशितः। तदा लवपुर-वास्तव्यो दयारामो नाम क्षत्रिय उत्थाय सविनयम् अवोचत् :—"सत्यप्रभो! अहं स्व-शिरः श्रीचरणेभ्यः समर्पयामि। श्रीभगवत्-पाद-तरवारि-धारायां निमज्ज्य जनन-मरण-बन्धन-मोक्ष-प्राप्तेः श्राघ्यतरः को लाभः!" इति। श्रीगुरुचरणानाम् इङ्गितम् अनुसृत्य दयारामस् तान् पश्चिमेन नाऽतिदूरे च स्थापितं पट-वेश्म प्रविवेश, तम् अनु

श्रीगुरुचरणाश् च । मुहूर्ताद् अनन्तरं शोणित-कणान् श्च्योतयन्तं करवालं करेण उल्लासयन्तः श्रीगुरुचरणाः सभां प्रत्यागताः, पूर्ववच्च शीर्षा-ऽन्तरम् अजिघृक्षन् । तेषां तादृशो व्यवहारो बहुभिः सभासद्भिर् द्रष्टुं सोढुं च अशक्योऽभूत् । केचित् ततोऽपसृताः । केचित् पुनः श्रीगुरुचरणानां जननीम् उपेत्य सर्वं वृत्तम् तस्या आचख्युः । अविचलित-स्थितानां सभासदां मध्यत इन्द्रप्रस्थ-वास्तव्यो धर्मदासो नाम जट्ट उत्तस्थौ, अञ्जलिं बद्ध्वा च विनीतेन स्वरेण अभिदधौ :—"परमस्वामिन् ! युष्मच्चरणानां विनम्र-दासोऽहं स्व-जीवितं समर्प्य कृत-कृत्यो बुभूषामि । सत्यप्रभो ! सिक्ख-धर्म-दीक्षा-ग्रहण समये मया आत्मनः शीर्षं मनसा युष्मभ्यम् अर्पितम् ।" इति ।

अथ धर्मदासोऽपि दयाराम-गतिं गतः । ततः श्रीगुरुचरणैः पुनरपि यथा-पूर्वम् एकैकशः शीर्ष-त्रयम् अभिलषितम् । तदा द्वारकापुरी-निवासी मुहकमचन्द्रो नाम वस्त्र-धावकः, जगन्नाथपुरीयो हिम्मतनामा धीवरः (पानीयवाहकः), बीदर-वास्तव्यः साहिबचन्द्रो नाम नापितः इत्येते त्रयः क्रमात् स्व-शीर्षाणि प्राद्धुः ।

अथ मुहूर्ताद् अनन्तरं श्रीगुरुचरणा बली-कृत-शिरस्कान् पुण्यात्म-प्रवरान् पञ्चाऽपि स्व-भक्तान् यथा-पूर्व-क्रमम् एकैकशः पट-वेश्मतः सभाम् आनयन् । परमार्थेन, शैल-चरणोपरि स्थापिते, श्रीगुरुचरण-नियुक्तैर् विश्वस्तैः पुरुषैः कृता-ऽवेक्षणे च, तस्मिन् पट-वेश्मनि पञ्च अजा वधाय बन्धने धृता आसन्, तत्रैव च

विशिष्ट रूप-वर्णानि पञ्च नेपथ्यानि पुरुष-पञ्चकेन परिधातुम् अर्हाणि सज्जानि अभूवन्। केसर-रसेन रक्तान् शुभ्रान् तान् पटान् परिदधानाः, तद्-वर्णकैर् एव उष्णीषैश् च अलङ्कृत-मूर्धानः, ते 'कीर्त्तिमन्तः पञ्चकीयाः', हृदयेन श्रीगुरुचरणोपकारं स्मरन्तः, तादृश-वेषशालिनः श्रीगुरुचरणान् सादरम् अनुसरन्तः, सभाम् आगताः। भूयसां सभासदां ततोऽपसरणेन कृशी-भूता, यावदिदानीं च आतङ्क-स्तब्धा, सभा तान् अक्षत-शरीरं प्रतिनिवर्त्तमानान् आलोक्य भूयोऽपि विस्मयेन च विमोहेन च स्तब्धतराऽभवत्।

इमे मे "पञ्च प्रियाः।" इति विज्ञाप्य श्रीगुरुचरणास् तान् पञ्च स्व-प्रियान् सभा-समक्षम् अक्षय्येण यशसा समवर्धयन्। "परमेश्वरस्य अनुकम्पया एव अहं श्रीगुरुनानक-भगवत्-पादानाम् अभीष्टं कार्यं पूर्त्तिम् अनयम्।" इति विचार्य श्रीगुरुचरणाः परमेश्वरं प्रति आत्मनोऽनुगृहीतत्वं प्राकाशयन्। ततस् तैर् उक्तम्:— 'सुदुस्तरां परीक्षाम् अनवद्यया पद्यया उत्तीर्य मत्-प्रिया एते पञ्च सिक्खा आत्मानं भागवतीनाम् आशिषाम् आस्पदम्, स्व-धर्मं च गौरवस्य भाजनं कृतवन्तः।" इति। पुनश् च तैर् अभिहितम्:— "'वाहे गुरु जी का खालसा' ('भगवतो विशुद्धो मार्गः') इति नाम्ना अभिधास्यमानाया यस्या धर्म-संस्थायाः प्रतिष्ठाम् अहम् अद्य चिकीर्षुर् अस्मि, एतत् 'प्रिय पञ्चकम्' तस्या बीजं भविष्यति।" इति।

अथ दीक्षा-संस्कारस्य समारम्भो बभूव। श्रीगुरुचरणा आयसे

शरावे धृतं शुद्धं निर्मलं जलं द्विधारया करवालिकया अमथ्नम्। माता जीजोजी शर्करा आनीय उपतस्थे, श्रीगुरुचरणानां सङ्केतेन च ताः शराव-धृते जले अपातयत्। एवं शर्करा-माधुर्यस्य लोह-रसायनतत्त्वस्य च मिथो मिश्रणाद् 'अमृतम्' उदपद्यत।

अथ अमृत-पानं प्रारब्धम्। तदर्थं प्रथमं पूर्वोक्ताः 'पञ्च प्रियाः'—क्षत्रियः, जट्टः, वस्त्र-धावकः, धीवरः (पानीयवाहकः), नापितश् च—अम्रियन्त। क्रमेण तेषाम् एकैकेन अमृतम् आचान्तम्। तथाहि, अमृतम् आचिचमिषुः श्रीगुरुचरणोपान्तम् उपेत्य वीरा-ऽऽसनबन्धेन उपाविशत्। तस्य कर-तलम् आचमनीयेन नवोत्पादितेन अमृतेन पूरयन्तः श्रीगुरुचरणाः "वाहे गुरु जी का खालसा; वाहे गुरु जी की फ़तेह।" ('स्वागतम् आश्चर्यभूतस्य भगवतो विशुद्धायै संस्थायै; स्वागतं जयश्रियः स्वामिने आश्चर्यभूताय भगवते।') इति अभिनवमन्त्र-वाक्यम् अपठन्। दीक्ष्यमाणः पुरुषोऽपि तद् वाक्यं श्रीगुरुचरणान् अनु अपठत्। इत्थं पञ्चसु सञ्जीवना-ऽऽचमनेषु समाप्तेषु श्रीगुरु-महाभागा दीक्ष्यमाणस्य मस्तकं तेन अमृतेन प्रौक्षन्, एकलक्ष्यी-कृतां स्व-दृष्टिं तस्य नेत्रयोर् निक्षिप्य च आत्मनोऽन्त-र्ज्योतिषा तस्य आत्मानं विद्योतयामासुः, ततश् च 'यावज्जीवं भागवतं स्वं खलु इदम्।' इति ज्ञापयितुं तस्य मूर्धजान् अमृतेन प्रौक्षन्। तदनन्तरं श्रीगुरुचरणैः प्रत्तम् अमृत-पूर्णम् आयसं तं शरावं तेषाम् आदेशेन ओष्ठाभ्यां धृत्वा 'अद्य-प्रभृति सयुजः सखायो वयम्।' इति व्यञ्जयितुं ते पञ्च अमृतपायिनः सिक्खाः क्रमेण तद् अवशिष्टम् अमृतम् आचेमुः। इत्थं तेषां नवं

विशिष्ट रूप-वर्णानि पञ्च नेपथ्यानि पुरुष-पञ्चकेन परिधातुम् अर्हाणि सज्जानि अभूवन् । केसर-रसेन रक्तान् शुभ्रान् तान् पटान् परिदधानाः, तद्-वर्णकैर् एव उष्णीषैश् च अलङ्कृत-मूर्धानः, ते 'कीर्त्तिमन्तः पञ्चकीयाः', हृदयेन श्रीगुरुचरणोपकारं स्मरन्तः, तादृश-वेषशालिनः श्रीगुरुचरणान् सादरम् अनुसरन्तः, सभाम् आगताः । भूयसां सभासदां ततोऽपसरणेन कृशी-भूता, यावदिदानीं च आतङ्क-स्तब्धा, सभा तान् अक्षत-शरीरं प्रतिनिवर्त्तमानान् आलोक्य भूयोऽपि विस्मयेन च विमोहेन च स्तब्धतराऽभवत् ।

इमे मे "पञ्च प्रियाः ।" इति विज्ञाप्य श्रीगुरुचरणास् तान् पञ्च स्व-प्रियान् सभा-समक्षम् अक्षय्येण यशसा समवर्धयन् । "परमेश्वरस्य अनुकम्पया एव अहं श्रीगुरुनानक-भगवत्-पादानाम् अभीष्टं कार्यं पूर्त्तिम् अनयम् ।" इति विचार्य श्रीगुरुचरणाः परमेश्वरं प्रति आत्मनोऽनुगृहीतत्वं प्राकाशयन् । ततस् तैर् उक्तम् :— 'सुदुस्तरां परीक्षाम् अनवद्यया पद्यया उत्तीर्य मत्-प्रिया एते पञ्च सिक्खा आत्मानं भागवतीनाम् आशिषाम् आस्पदम्, स्व-धर्म च गौरवस्य भाजनं कृतवन्तः ।" इति । पुनश् च तैर् अभिहितम् :— "'वाहे गुरु जी का ख़ालसा' ('भगवतो विशुद्धो मार्गः') इति नाम्ना अभिधास्यमानाया यस्या धर्म-संस्थायाः प्रतिष्ठाम् अहम् अद्य चिकीर्षुर् अस्मि, एतत् 'प्रिय पञ्चकम्' तस्या बीजं भविष्यति ।" इति ।

अथ दीक्षा-संस्कारस्य समारम्भो बभूव । श्रीगुरुचरणा आयसे

शरावे धृतं शुद्धं निर्मलं जलं द्विधारया करवालिकया अमथ्नन्। माता जीजोजी शर्करा आनीय उपतस्थे, श्रीगुरुचरणानां सङ्केतेन च ताः शराव-धृते जले अपातयत्। एवं शर्करा-माधुर्यस्य लोह-रसायनतत्त्वस्य च मिथो मिश्रणाद् 'अमृतम्' उदपद्यत।

अथ अमृत-पानं प्रारब्धम्। तदर्थं प्रथमं पूर्वोक्ताः 'पञ्च प्रियाः'—क्षत्रियः, जट्टः, वस्त्र-धावकः, धीवरः (पानीयवाहकः), नापितश् च—अम्रियन्त। क्रमेण तेषाम् एकैकेन अमृतम् आचान्तम्। तथाहि, अमृतम् आचिचमिषुः श्रीगुरुचरणोपान्तम् उपेत्य वीरा-ऽऽसनबन्धेन उपाविशत्। तस्य कर-तलम् आचमनीयेन नवोत्पादितेन अमृतेन पूरयन्तः श्रीगुरुचरणाः "वाहे गुरु जी का ख़ालसा; वाहे गुरु जी की फ़तेह।" ('स्वागतम् आश्चर्यभूतस्य भगवतो विशुद्धायै संस्थायै; स्वागतं जयश्रियः स्वामिने आश्चर्यभूताय भगवते।') इति अभिनवमन्त्र-वाक्यम् अपठन्। दीक्ष्यमाणः पुरुषोऽपि तद् वाक्यं श्रीगुरुचरणान् अनु अपठत्। इत्थं पञ्चसु सञ्जीवना-ऽऽचमनेषु समाप्तेषु श्रीगुरु-महाभागा दीक्ष्यमाणस्य मस्तकं तेन अमृतेन प्रौक्षन्, एकलक्ष्यी-कृतां स्व-दृष्टिं तस्य नेत्रयोर् निक्षिप्य च आत्मनोऽन्त-र्ज्योतिषा तस्य आत्मानं विद्योतयामासुः, ततश् च 'यावज्जीवं भागवतं स्वं खलु इदम्।' इति ज्ञापयितुं तस्य मूर्धजान् अमृतेन प्रौक्षन्। तदनन्तरं श्रीगुरुचरणैः प्रत्तम् अमृत-पूर्णम् आयसं तं शरावं तेषाम् आदेशेन ओष्ठाभ्यां धृत्वा 'अद्य-प्रभृति सयुजः सखायो वयम्।' इति व्यञ्जयितुं ते पञ्च अमृतपायिनः सिक्खाः क्रमेण तद् अवशिष्टम् अमृतम् आचेमुः। इत्थं तेषां नवं

जन्म, नवश् च बन्धु-सम्बन्धोऽजायत; पैतृकस्य वंश-सम्बन्धस्य, वृत्ति-व्यवसायस्य, धर्मस्य च विनाशोऽभवत्। शाश्वतम् एकम् अद्वितीयं ब्रह्म एव तेषाम् उपास्यम् अभूत्, न देवा-ऽन्तरम्। तदारभ्य श्रीगुरुगोविन्दसिंह-भगवत्-पादास् तेषां तात-पादाः, माता साहिबदेवाँ च जननी, आनन्दपुरं च अभिजनो बभूव। इत्थं तेषां पूर्वतन-सर्व-सम्बन्धस्य विच्छेदो व्यजायत।

ते पञ्च सिक्खाः श्रीगुरुगोविन्दसिंह-भगवत्-पाद-प्रसूतायाः, त्यक्त-स्वार्थानां रण-रसिकानां चातुर्वर्ण्य-भेद-मुक्तानां सिक्खानां मातृ-भूतायाः, 'खालसा'-संस्थायाः कललताम् अगमन्।

तान् प्रति धर्मं व्याचक्षाणैः श्रीगुरुचरणैर् उक्तम्:—"असहायानां साहाय्यं कुरुध्वम्, सतां सन्तापकरैः सह सङ्ग्रामयध्वम्; निष्कलम् एकं ब्रह्म उपाध्वम् धर्म-वर्ण-भेदम् उपेक्ष्य मनुज-मात्रं समानं जानीध्वम्।" इति। अथ पुनस् ते श्रीगुरुचरणैर् उक्ताः:— "यूयं श्रीनानक-भगवत्-पादानां—स्वयं जगत्-स्रष्टुः—पुत्राः, विशिष्टाः पुत्राः, स्थ। युष्माकं 'खालसा' (विशुद्धाः) इति नाम करोमि। यूयं सिक्ख-धर्म-ग्रन्थस्य शिष्याः, मनुष्य-मात्रस्य परित्रातारः, न जातुचिदपि स्वल्पाया अपि सम्पत्त्याः स्वामिन भविष्यथ; धर्म-वर्ण-भेदं विस्मृत्य च सर्व-मनुष्येषु निर्विशेषं स्नेहं पालयिष्यथ। अद्य अहं युष्मासु यद् जीवना-ऽर्चिः प्रदीपितवान् अस्मि, शाश्वतं ब्रह्म एकतान-मनसा ध्यायन्तो यूयं तथा आचरिष्यथ यथा तद् अर्चिर् निर्वात-दीप-शिखा इव निष्कम्पं सततं च समुज्ज्वलेत्।

केवलं गुरुं प्रति शिरो नमयिष्यथ; न जातुचिद् जड-पदार्थान् पाषाणान्, प्रतिमाः, मृत-समाधीन् वा पूजयिष्यथ। सङ्कटे दुर्गमे च सर्वदा नानक, अङ्गद, अमरदास, रामदास, अर्जुनदेव, हरगोविन्दसाहिब, हररायसाहिब, हरकृष्ण, तेगबहादुर इति पावनानि गुरु-नामानि स्मरिष्यथ। अमीषां नाम्नां यां मालां युष्मभ्यं प्रयच्छामि तां निखिल-'खाल्सा-'संस्थायाः कृते आवर्तयिष्यथ न केवलस्य आत्मनः कृते। 'युष्माकम् एकैकः सकल-'खाल्सा'-संस्थाया अवतारः' इति स्मरत। पार्थिवेन चैतन्येन च अंशेन, उभयथा, यूयं मम आत्मजाः स्थ।" इति। अथ श्रीगुरुचरणैर् "यथा अहम् अमृतम् उत्पादितवान् तथा यूयं तद् उत्पादयत।' इत्यादिष्टाम् ते तद् उदपादयन्। तथा सति, श्रीगुरुचरणा अञ्जलिं बद्ध्वा तेषां पुरः स्थित्वा "स्व-बन्धु-समाज-दीक्षा मे प्रदेया।" इति प्रार्थयन्। तच्छ्रुत्वा सर्वे विस्मयम् आययुः, किङ्कर्त्तव्य-विमूढाश् च बभूवुः। अथ तेषां मोहं विभञ्जयितुं श्रीगुरुचरणा अवोचन्:—"अविनाशिनः परमपुरुषस्य आज्ञया एव 'खाल्सा'-संस्था असृज्यत। अनया सह मम अभेदात् मया युष्माकम् एकत्वेन भवितव्यम्। मत्-प्रतिमा-भूताम् एव 'खाल्सा'-संस्थाम् अहं सृष्टवान् अस्मि। एषा संस्था मम देहम्, मे द्वितीय आत्मा, इष्ट-सुहृच्च वर्तिष्यते। यथा श्रीगुरुनानक भगवन् पादा अङ्गदं गुरु-पीठे अभिषिक्तवन्तः, तथैव अहं 'खाल्सा'-संस्थायै गुरु-पदं प्रदत्तवान् अस्मि।" इति।

तस्मात् दिनात्, श्रीगुरुचरणाः स्वीयं सिंहनाम, पञ्च अमानयन,

तेषां गुणांश् च अकीर्त्तयन्। 'खालसा-महिमा'-सञ्ज्ञितायां स्व-कृतौ तैर् उक्तम् ;—

"सिक्खानाम् आनुकूल्येन अहं रणेषु विजय-श्रियम् आप्नवम्।
तेषां वदान्यतया अहं विपुलं धन-राशिं विश्राणयितुम् अपारयम्।
तेषां साहाय्येन मम विपदो विनष्टाः।
तेषाम् अनुग्रहेण मम ऋद्धयो विवृद्धाः।
तेषाम् अनुकम्पया अहं विद्याम् उपार्जयम्।
तेषाम् अनुकम्पया अहं स्व-रिपून् अजयम्।
तेषाम् अनुकम्पया अहं ग्रोन्नतं पदम् आरोहम्।
अन्यथा मादृशां क्षुद्र जन्तूनां लक्षाणि लोके वर्त्तन्ते।

शरीरं मे, शिरो मे, धीर मे, श्रीर् मे, अन्यच्च यत् किञ्चिद् मदीयं स्यात् तद् अशेषं तेषां मङ्गलाय कल्पताम्।" इति।

अस्तु। 'खालसा' (विशुद्धाः) इत्यधिकार पदे प्रतिष्ठापिताम् ते पञ्च सिक्खाः श्रीगुरुचरण-दर्शितां दिशम् अनुस्मरन्तोऽमृतम् उदपादयन्। ततः श्रीगुरुचरणास् तेषां हस्तेभ्यस् तथैव 'खालसा'-दीक्षाम् आपुर् यथा ते स्वयं तेभ्यः प्रादुः। "अहो स्वागत पुरुषोत्तमाय श्रीगुरुगोविन्दसिंहाय, यः स्वयं गुरुः स्वयं शिष्यः!" स्व-शिष्याणां हस्तेभ्यः 'खालसा' दीक्षायाः प्राप्तेर् अनन्तरं श्रीगुरुचरणानां गोविन्ददासेतिनामधेयं गोविन्दसिंहेति अजायत। अस्मिन् दीक्षा-ऽनुष्ठाने श्रीगुरुचरणैर् आत्मा 'खालसा'-संस्थायां

विलीनी-कृतः, संस्था, पुनः, स्वकीया-ऽद्भुत-शक्त्या समाढ्या कृता।

अथ श्रीगुरुचरणैर् य उपदेशः कृतम् तस्य विज्ञापना राज-पुरुषैर् अवरङ्गजेबाय प्रेषिता। तस्या अनुसारेण तेषाम् उपदेशस्य सारम् इदम् :—

"यूयं सर्वे सिक्खाः सर्व-धर्म-भेदान् विहाय एकम् एव धर्म शरणं व्रजत। चातुर्वर्णिकान् तांस् तान् वर्ण-धर्मान् सर्वथा विस्मृत्य एकेन एव विधिना ईश्वरोपासनाम् अनुतिष्ठत, भ्रातरश् च भवत। न इतर इतरेभ्यः श्रेष्ठम्मन्यः स्यात्। चातुर्वर्णिका लोका अस्मद्-धर्म-दीक्षाम् आप्नुवन्तु। सह तेषां अन्न-भागः स्यात्, समानी प्रपा। मा अन्य· अन्यं द्विक्षत्।" इति। पुनश् च तैः प्रोक्तम् :—"असत्-प्रवर्त्तितो मार्गोऽय न सुगमः। क्षुरस्य निशिता दुरत्यया धारा इव पथम् इदं दुर्गम्। श्रद्धावताम्, विषय-विरत-वृत्तिमताम्, संयम-धनानाम्, ऋतम्भर-प्रज्ञाशालिनां खलु अयं मार्गः।" इति। एवम् उपदिश्य अपि तैर उक्तम् :—"युष्मासु ये नाम सिक्खा मया सन्दर्शितेन सतां मार्गेण गन्तुं व्यवस्यन्ति ते मम अग्रत आयान्तु, 'खाल्सा'-संस्थाया दीक्षां च [पदकानुकाराणि] व्यञ्जनानि च प्राप्नुवन्तु।" इति। तस्मिन् एव राजकीय-विज्ञापना-पत्रे पुनर् उपन्यस्तम्—"तत्र सन्निहितानां सिक्खानां कतिचिद् न खाल्सा-धर्म-दीक्षाम् अरोचयन्। अथापि 'भू-भार-हरणाय श्रीगुरुगोविन्दसिंह-रूपेण भगवान् स्वयं वैकुण्ठाद् भुवम् अवतीर्णः।' इति इदं श्रद्दधानाः

प्रायेण सहस्र-द्वयाद् अनूना नरा उत्थाय श्रीगुरुचरणा-ऽऽदेशं पालयितुं प्रतिश्रुतवन्तः।" तेषां मध्यतः रामसिंह, देवासिंह, टहलसिंह, ईशरसिंह फतेहसिंह इति पञ्च दीक्षाम् आप्तुं प्रथमम् अग्रे आगताः। ते पञ्च 'मिथ्या-बन्धनेभ्यो मुक्ताः।' इति अभिप्रेत्य श्रीगुरुचरणैः 'पञ्च मुक्ताः' इति गुण-वचनेन विभूषिताः। अथ सर्वे दीक्षेप्सवो वर्गश उत्थाय पुरो गत्वा च यथा-विधि दीक्षाम् आपुः। दीक्षा-संस्कारो बहुतिथेन कालेन परिसमाप्तिं गतः। सिक्खानां सहस्राणि 'खालसा'-क्रोडम् उपारोहन्, शारीरिकं शारीरकं च नवं जीवनम् अलभन्त। तान् दिवसान् मृदु-मृदुक इव कोऽपि आध्यात्मिक उद्भव उत्साहश् च आनन्दपुरं परिव्याप्तवान्।

सिक्खानां मार्ग-दर्शनाय विध्यन्तराणि च अक्रियन्त। तत्र केश-श्मश्रु-कर्त्तनं धूम्र-पानं माहम्दीय-धर्म-रीत्या शनैः शनैः विशस्तस्य पशोर् मांसस्य अशनं च निषिद्धम्। "अस्य विधि-निषेध-शासनस्य उल्लङ्घिता 'खालसा' तो बहिष्कार्यः। बहिष्कृतश् च यदि पुनः खालसाम् अनुप्रविविक्षेत् तदा दण्डं भुक्त्वा 'न अहं पुनर् ईदृशम् आचरिष्यामि।' इति प्रतिज्ञाय च, दीक्षा-पुरःसरम् अनुप्रवेशम् अर्हति। दण्डश् च गुरोर् भोजनशालायां शरीरेण सेवा वा, धर्म-समज्यायां सङ्गतानां परमेश्वर-नाम-स्मरण-गुण-कीर्त्तनम् अनुतिष्ठतां सिक्खानाम् उपानद्वां मार्जनं वा, स्यात्।" इत्यपि पर्यभाष्यत।

अपि च, सिक्खान् प्रबोधयद्भिः श्रीगुरुचरणैर् उक्तम् :—

"न युष्माकं प्रतिमा-पूजकैः, दुहितृ-हन्तृभिः, 'सती'-समर्थकैः, स्व-दुहितॄणां पाणीन् मुगल-शासकैः पीडयद्भिः सह संसर्गः, तैर् वा किमपि प्रयोजनं भविष्यति। किन्च, गृहीत-खालसा-दीक्षाः सिक्खा वर्ण-व्यवस्था-विचारं विहाय एकस्यां पङ्क्तौ सह भुञ्जीरन्, आपत्-काले अन्योन्यस्य सहायतां गच्छेयुः, स्वयं परिश्रम्य उपार्जितेन अर्थेन जीवेयुः, स्व-सम्प्रदाय-सम्बन्धाद् बन्धु-भूतानां हिते आत्मन आयस्य दशमां-ऽशं गुरु-संस्थायै प्रदद्युः, मा स्म जातुचिद् याचिषत, मा स्म परस्य सम्पदायै वा, धर्मम् उद्दिश्य दाने त्यक्ताय धनाय वा लुभन्। धर्म-संस्था-स्वं मा स्म कथञ्चिदपि लिप्सिषत।" इति।

श्रीपूज्या-ऽर्जुनदेव-सम-काल-भवेन धर्म-प्राणेन विदुषा भाई-गुरुदासेन रचितं पद्यम् एकं श्रीगुरुचरणाः सिक्ख-प्रबोधनार्थं प्रायेण अपठन्। तत्र च अयम् अर्थो गर्भी-कृतः :—

"यथा हिन्दूनां गो-मांस-भक्षणं निषिद्धम्;

यथा माहम्मदीयानां शूकर-मांस-भक्षणं कुसीद-ग्रहणं च निषिद्धम्;

यथा श्वशुरस्य जामातृ-गृहे जलस्य अपि ग्रहणं निषिद्धम्;

यथा मार्ग-मार्जकः ['मेहतर' इति प्रसिद्धः] क्षुधा-ऽऽर्तोऽपि न शूकर-मांसम् अत्ति;

यथा मधुनि मग्ना मक्षिका न किञ्चिन् लभते, तथैव, पुनर्, म्रियते;

तथैव धर्मार्थं दत्तस्य धनादिकस्य लोभो निषिद्धः। धर्म-स्वं हि पयो-मुखं विष-कुम्भं जानीयात्।"

श्रीगुरुचरणैर् उपदिष्टम्:—

"केवले 'अकाल-पुरुषे' युष्माकं परमा निष्ठा भवतु। एष मे प्रथमः परमश् च आदेशः। एतन्निष्ठार्थम् एव मनुष्यस्य जन्म भवति, अनया एव च तस्य सर्वे जीवन-व्यापाराः सार्थका भवन्ति। तस्मात् सर्वा-ऽऽरम्भात् पूर्वं यूयम् 'अकाल-पुरुषम्' उपतिष्ठध्वम्, आशिषश् च याचध्वम्।" इति।

खालसा-संस्थायाः प्रतिष्ठापनेन श्रीगुरुगोविन्दसिंह-भगवत्-पादा ईश्वर प्रेरणा-जन्याम्, कवि-भावनाम् इव, स्व-हृदय-गतां सिसृक्षाम् अपूरयन्, लोकोद्धरणाय विचिन्त्यमानस्य अभ्युपायस्य मूर्त्तत्वं च असाधयन्। ऐतिहासिकैर् अविस्मरणीयं तेषाम् इदम् महत् कर्म विचारवतां नृणां पुरतः कामपि हठाद् आकर्षन्तीम्, अदृष्ट-पूर्व-सौन्दर्य-शालिनीम्, अमलाम्, विचार-दिशम् उदमीलयत्। भारतीयानां प्रसुप्ताः सर्जन-शक्तयः श्रीगुरुचरणानाम् अनेन अवदानेन विश्वजनीनानां तात्त्विक-कर्मणाम् अनुष्ठानाय उद्बोधिताः। तत आत्मनो हीन-दीन-दशा, पर-दासता, जघन्या-ऽवस्था च भारतीयानां बुद्धौ विशदम् आविर्भूताः; ते च स्वा-ऽवलम्बेन अविश्रान्त-परिश्रमेण कठोर-कर्मठत्वेन च आत्मनः सङ्कट-शृङ्खलाः शकलयितुं परिकरम् अबध्नन्।

ये अन्ध-विश्वासा जाति-वर्ण-भेदाश् च तेषां बलं कतिपय-

शताब्दान् अपाहरन् तेषाम् उत्साहं च अलुम्पन् इदानीं ते तेभ्योऽमुच्यन्त, आत्मनः पौरुष-शक्त्याः दैवस्य च नूतनं स्वरूपम् आलोकन्त। तस्माद् एव हेतोर् उत्तरापथे प्रतिगृहं नव्य-प्रकारकं तत् शौर्य आगराम्चकार यद्-बलाद् अपूर्व-वीरता-त्यागितोभया-ऽऽश्रितानाम् अवदात-कर्मणां काऽपि निष्पारा परम्परा प्रावर्त्तत, तस्याश् च हेतोः समस्ता अवस्था नूनं तथा पर्यवर्त्तत यथा पुरातना-ऽवस्थायाः पुनरावर्त्तनम् असम्भवम् अभवत्।

अतः परं किम् आश्चर्यं यत् श्रीगुरुगोविन्दसिंह-भगवत्-पादाः स्व-दीन-हीन-दशां कण्ठेन आश्लिष्य सुखं प्रसुप्तान् उत्साह-जिगीषा-ऽऽदि-गुणैः सर्वथा विहीनान् भारतीयान् अपौरुष-गर्त्ताद् उदधरन्।

खालसा-संस्थां प्रतिष्ठाप्य लोक-हित-काम्यया शक्ति चिर्चीपद्भिः श्रीगुरुचरणैः पार्वतीय-पृथिवीपतिभ्यः सन्देशः प्रहितः :—"अचिरात् पूर्वम् अस्मत्-प्रतिष्ठापितायाः खालसा-संस्थाया दीक्षां प्राप्य लोका-तिकरैर् जनैः सह भाविषु सङ्ग्रामेषु अस्माकं सह-योधिनो भवन्तु भवन्तः।" इति।

पर्वतीयैः क्षितिपतिभिः प्रत्युक्तम् :—"एकैकम् तुरुष्क एकैकम् अजम् अत्तु क्षमः। तर्हि कथं नु ओदना-ऽशना वयं तैः सह सङ्ग्रामयितुं समर्थाः। यदि वा अलं चटकाः श्येनेभ्यः? शृगाला वा सिंहेभ्य?" इति।

न केवलं गैरेयेषु प्रत्युत अंगरेयेषु अपि हिन्दु-नरपति धौरेयेषु,

स्वस्थ-शरीरे व्रण-जनितः पूय इव, उत्पद्य प्रसर्पन् योऽयं कापुरुष-भाव आसीत्, स्वास्थ्य-निमित्तं तस्य निस्सारणम् आवश्यकम् अभूत्। अमृता-ऽऽचमन-प्रयोगेण, अन्या-ऽऽध्यात्मिक-विज्ञानो-पदेशेन च श्रीगुरुचरणैस् तादृक् कापुरुषतोपहताः पुरुषाः श्रद्धोत्साहयोः शक्तिभ्याम् आप्यायिताः। श्रीगुरुचरणा एकं सिक्खं स-पाद-लक्ष-नर-बल-धरम् आपादयन् चटकाभिश् च श्येनान् अघातयन्। मार्गमार्जक-नापित-तन्तुवाया-ऽऽदि-जातीया ये नरा वर्ण-व्यवस्था-भारेण प्रपीडिताः समाजे नाना-ऽधिकारैर् हीनाश्च बभूवुः, यैर् न जातुचित् कृपाणः स्पृष्टः, ये वा रक्त-स्रावं विलोक्य हृदय-कम्पात् शिरो नमयित्वा उपाविशन्, तान् श्रीगुरुचरणा अप्रमेय-वीर्यवतो महा-वीर-भटान् अकुर्वन्——क्षयग्रस्तं भारतं वर्षं सञ्जीवनौषधरसं पाययित्वा पुनस् तारुण्यम् आनयन्।

सिक्ख-धर्मस्य व्यञ्जकानि कृपाणादीनि बिभ्रत् सिक्खः सिंहम् अन्वहरत्। 'ख़ालसा'-संस्था-बलेन सिक्खस्य अन्तरात्मा यथा व्यायतिं गतस् तथैव देहोऽपि।

अष्टादश-नवदशोभय-ख्रीष्टशताब्द्योर् अन्तराल-काले सिक्ख-वीराणां शरीराणि कर्माणि च तुल्यबला-ऽऽकाराणि खलु बभूवुः। तथाहि, अहलुवालिया जस्सासिंह, नवाब कपूरसिंह, बाबा आलासिंह, हरिसिंह नल्वा, अकाली फूलासिंह, अटारीवाला शामसिंह, महाराज शेरसिंह इत्यादीनां येषां नरर्षभाणां वीर्य-कर्माणि तदानीन्तनम् ऐतिह्यं रोचमानं माङ्गल्यम् अविस्मार्यं च

अकुर्वन्, ते वरा-ऽङ्ग-रूपोपेताः, साल-प्रांशवः, पीवानः, चित्रोपमाः, व्यूढोरस्काश् च आसन्।

श्रीगुरुनानक-भगवत्-पादानां कालाद् आरभ्य त्रिंशदुत्तर-द्विशत-वर्ष-पर्यन्तं सिक्ख-गुरूणाम् उद्यमेन याः परमार्थेन प्रत्यक्षावगम्या वस्तु-रूपाः क्रियाः सम्पाद्यन्ते स्म तासु श्रीगुरुगोविन्दसिंह-भगवत्-पादैः कृता खालसा-प्रतिष्ठा मूर्धन्यायते स्म। सर्व-सिक्ख-गुरुचरणानां यः प्रधानी-भूत उपदेश-पादपोऽभूत् स श्रीगुरुगोविन्द-सिंह-भगवत्-पादतया अफलत्। 'विकास'-क्रिया सर्वेषां गुरूणां जीवन-कालान् अभिव्याप्य प्रावर्त्तत सर्वैर् एव गुरुभिः स्व-स्व-रीति-नीतिभ्यां कृतेन दिग्-दर्शनेन, तत्-तत् काल-भवाभिर् विभिन्न-घटनाभिश् च तस्या 'विकास'-क्रियाया वेगोऽपुष्यत। एतदन्तराले श्रीगुरुनानक-भगवत्-पादैः सम्प्रवर्त्तितं धर्म-चक्रं राज-नयस्य उपस्कुरुते स्म। अथापि आद्य-श्रीगुरुचरणैः प्रतिपादितानां सार-भूत-सिद्धान्तानाम् अवहेलनं कदापि नाऽभूत्। वस्तु-तत्वे, खालसा-संस्थाम् अधिकुर्वतां सर्वेषां विध्युपविधीनां मूलं श्रीदशमगुरुचरणेभ्यः पूर्वतनानां सर्वेषां श्रीगुरुचरणानाम् शासना-ऽनुशासनेषु सुमूलयम्। श्रीदशमगुरुचरण प्रसूतायाः खालसा-संस्थायाः प्रमुखो राद्धान्तः 'स्वयम् अकामोऽपि अकाल-पुरुषो दयामयो भक्त-वत्सलश् च। केवलं तस्मिन् अस्माकं दृढा आस्था निष्ठा च स्यात्।' इति। अयम् एव राद्धान्तः सिक्ख-धर्मस्य नाभिर् अभूत्। श्रीदशमगुरुचरणाः काव्य-व्यापारेण प्रज्ञाधनतामिर् व्यापारेण च यावज्जीवम् अनवरततमया रीत्या

इमं राद्धान्तं समर्थयाञ्चक्रुः। आद्य-श्रीगुरुचरणैः समष्टि-गता आत्म-विशुद्धिर् मनुष्य-जीवनस्य परमोद्देश्यतया उपदिष्टा, न व्यष्टि-गता। ते स्वयं प्रतिमा-पूजाम्, अन्ध-विश्वास-भूयिष्ठान् धर्म-सिद्धान्तान्, सन्त्रासकरीं चातुर्वर्ण्य-व्यवस्थां च बहुधा निराकुर्वन्, तद्-दोष-निवारणाय च प्रायस्यन्। ते भारतम् आक्रम्य प्रजा-पीडन-परायणान् विदेश्यान् नरा-ऽपसदान् अपि अनिन्दन्। शनैः शनैः सिक्ख-भक्त-समाजः श्रीगुरुचरणान् आत्मनो जनकत्वेन जानन् सिक्ख-बन्धु-समाज-रूपम् आपन्नः। श्रीगुरुचरणा अपि एवं जायमाने सिक्ख-बन्धु-समाजे यथा अरमन्त न तथा आत्मनि। तेषां मते 'यदि गुरुर् विंशति-समः, तदा सिक्ख-बन्धु-समाज एकविंशति-समः' खलु आसीत्। वर्ण-भेद-विचार-शून्यानाम्, कर्म-काण्ड-विधि-विधान-बन्धन-मुक्तानाम्, गुर्वादेश-पालने सततम् अप्रमत्तानां गुरु-भक्तानां सोऽयं सिक्ख-बन्धु समाजः ख़ालसा-संस्थाया मूलम् अभूत्। श्रीदशमगुरुचरणैः प्रमुखतया उपदिष्टो योद्धृ-मार्गोऽपि न नूतन आसीत्। षष्ठ-नानक-श्रीगुरुहरगोविन्द-भगवत्-पादा गुरु पीठा-ऽऽरोहण-काले माला-ऽऽदि-साधुजन-लक्षणानि निषिध्य योद्धृ-लक्षणानि अवृण्वत। तथाहि, ते तदा कृपाण-युगलम् धृत्वा अवोचन् :—"एकः कृपाणो मम आध्यात्मिका-ऽभिषेकस्य अपरश् च एतल्लोकजीवना-ऽभिषेकस्य लाञ्छनं वर्त्तते।" इति। आध्यात्मिकम् एतल्लोक-जीवनीयं च——धार्मिकं सैनिकं च——इति द्वे उपादान-तत्त्वे मिथः संयुज्य ख़ालसा-शरीर-घटकतां गते। सिक्खानां सर्व-सामान्य-

सम्पत्ति-भूता सा चेयं ख़ालसा-संस्था 'मानव-जात्याः अभ्युदयस्य परमेश्वर-निर्दिष्टं साधनम् इदम् ।' इति मन्त्रयित्वा श्रीगुरुगोविन्द-सिंह-भगवत्-पादैः प्रौढिं प्रापिता । प्रकामं कृपाणः ख़ालसा-दीक्षां प्राप्तस्य सिक्खस्य व्यञ्जनं वर्त्तते, अथापि यदि स एकतरेण हस्तेन कृपाणं धारयति, तदा अन्येन मालाम् आवर्त्तयेत् । अन्यथा तत्-स्वरूपं न सर्वाङ्ग-पूर्णं न वा यथार्थं भविष्यति ॥

---

# चटकाः श्येनान् योधयन्ति

शारीरिक-बौद्धिक-शक्तीनां विकासेन चरम-सीमा-ऽवगाहने कृते, वयसस् त्रयस्-त्रिंशे वर्षे, यदा श्रीगुरुगोविन्दसिंह-भगवत्-पादैः ख़ालसा-संस्थायाः प्रतिष्ठा कृता तदा निरन्तरं सङ्ख्यया वृद्धिं गच्छन् भक्तानाम् अनुवर्त्तिनां च महान् गणस् तान् अनन्यया श्रद्धया अभजत् अपूजयच्च। अनुल्लेक्षित-पूर्वया, कुतूहलकारिण्या, रहस्यमय्या च रीत्या ख़ालसा-संस्थायाः प्रतिष्ठापनं तस्यां च तेषाम् आत्मनोऽशेषतो विलयनम् वीक्ष्य 'किन्तु एवंकरणे अमीषां प्रयोजनम्?' इति जिज्ञासमानस् तद्-भक्त-गणो मनो-बुद्धी तच्चरणेषु समाधाय तेषां क्रियां द्रष्टुम् आदेशं च श्रोतुम् उत्सुकोऽतिष्ठत्। वस्तुतः सर्वो हि भक्त-गणः श्रीगुरुचरणा-ऽऽदेशं सुदुर्लभम् अनुग्रहम्, तत्-सेवार्थे प्राण-त्यागं च स्व-जीवनस्य परमं फलम्, अमन्यत। ख़ालसा-संस्थाया निर्माणेन श्रीगुरुगोविन्दसिंह-भगवत्-पादा ईश्वर-निर्दिष्टस्य, स्व-जीवनोद्देश्य-भूतस्य, प्रयोजनस्य सिद्धचै भाविनः सङ्ग्रामस्य कृते अपेक्षितम् अलङ्कर्मीणम् अलं बलम् उदपादयन्। अखण्ड-महोत्साहशालिनाम्, अविचल-निश्चयवताम् अनन्य-भक्तानां सिक्खानां, श्रीगुरुचरणैः स्वयं स्यूतः, ख़ालसा-सञ्ज्ञितः, समाज एव तद् बलम् अभूत्।

आनन्दपुरे पूर्वोक्त-विधया वैशाख-सङ्क्रान्ति-पर्वणि नवं जीवनं लब्ध्वा, 'ये नाम श्रीगुरुनानक-धर्मा-ऽनुरागिणः ख़ालसा-दीक्षाम् आप्तुकामा भवेयुस् तेभ्यो दीक्षा दातव्या।' इति गुर्वादेशं मूर्ध्ना धृत्वा च, सिक्खाः प्रत्यग्रेण समुत्साहेन सम्भृता सन्तः स्व-गृहान् प्रतिनिवृत्ताः। श्रीगुरुचरण-दर्शितया दिशा पञ्च दीक्षिताः सिक्खा दीक्षां दातुम् अर्हन्ति स्म। एवं, 'यत्र दीक्षिताः पञ्च सिक्खा धार्मिक्याः क्रियायाः प्रयोजनेन सन्निधीयन्ते तत्र तन्मूर्त्तिषु श्रीगुरुचरणाः सन्निधीयन्ते।' इति सिद्धान्तः परिणतिं जगाम। आनन्दपुरात् स्व-गृहं प्राप्य सिक्खा आनन्दपुरे वीक्षितं वृत्तम्, तत्र अनुभूतं विलक्षणम् आनन्दम्, आत्मनो नव-जीवनस्य व्यञ्जकैः कृपाणादिभिः क्रियमाणां स्व-सम्भावनां च, हर्ष-निर्भर-गद्गद-वचोभिः श्रोतॄणां पुरोऽवर्णयन्। तेषां प्राणोल्लासन्यः कथाः श्रावं श्रावं बहवो गुरु-भक्ताः ख़ालसा-दीक्षाम् अकामयन्त। तदनन्तरम् आनन्दपुरम् उपेत्य दीक्षा-जिघृक्षूणां सङ्ख्या निरन्तरं वृद्धिं जगाम।

सार्ववर्णिका लोका आनन्दपुरम् आगच्छन्। चिरं चिरन्तन-समाज-रूढिभिस् तथा परिपीडयमाना जना आनन्दपुरे हीनता-ज्ञापकान् जात्यादि-भेदान् विस्मृत्य उत्तम-वर्ण-जनानां सम-कक्षताम् प्राप्नुवन्। श्रीगुरुगोविन्दसिंह-भगवत्-पादैः ख़ालसा-संस्थाम् आरोप्य भ्राजिष्णुतां नीतः, शाणोल्लीढो मणिर् इव, सिक्ख-धर्मः पञ्चापीय-कृषीवलानाम् अपि मनांसि अहरत्। पुष्टा-ऽङ्गा महा-सत्त्वाः पञ्चापीय-क्षेत्रा-ऽऽजीवाः सिन्धुनदम् उत्तीर्य

आगच्छद्भिर् भारता-ऽऽक्रान्तृभिः सह बहुकृत्वः शूयमाणा जय-पराजयौ दृष्टवन्तः, सर्वदा च हल-फलं करवालं कर्त्तुम् उद्यता आसन्। महाबलित्व-रणरसिकत्व-साहसिकत्व-प्रभृतयो ये तेषाम् अभिमता नायक-गुणाः, श्रीदशमगुरुचरणास् तैः सर्वैर् उपेता अभूवन्। श्रीगुरुचरणैर् निरूप्यमाणो धर्मस् तेषां मनस्सु वीर्यवत्-कर्मणां चिकीर्षाम्, पारतन्त्र्याद् मुमुक्षाम्, ख़ालसा-दीक्षा-जिघृक्षां च उदबोधयत्। पूर्व-गुरूणाम् उपदेशैर् उर्वरी-कृतेषु तेषाम् अन्तःकरण-क्षेत्रेषु पतितं श्रीदशमगुरूपदेश-बीजम् इष्ट-फल-दर्शि अभूत्। तेषां बहवो द्वि-धारया करवालिकया उत्पादितम् अमृतम् आचामन्। उद्भट-वीराणां रण-प्रिय-हृदयस्य वशी-करणम्, फल-प्रसविषु कर्मसु विनियोजनम्, साधुवृत्ति-रागेण रञ्जनं च सिक्ख-धर्मेतिहासे तथा आश्चर्य-भूतं कर्म, यथा द्विजत्व-वञ्चितेषु जनेषु अ-साङ्ग्रामिकेषु जना-ऽन्तरेषु च सङ्ग्राम्यान् गुणान् उत्पाद्य परिपोष्य च तैः समाजस्य अवस्थायां भीषण-परिवर्त्तनस्य अनुष्ठापनम्, समस्त-मानव-जातीतिहासे प्रसिद्धेषु आत्मत्याग-शौर्ययोः कर्मसु गणयितुम् उचितानां महतां कर्मणां साधनं च।

ख़ालसा-स्थापनातः समुत्थिताभिर् आनन्द-लहरीभिर् आनन्दपुरं परिव्याप्तम्। दीक्षा-काम्यतां नवं नवं गणम् आगच्छन्तम् अवलोक्य आनन्दपुर-पौरा अमाद्यन्, दीक्षा-संस्कारश् च दर्शक-हृदयानि भ्रातृ-स्नेह-दर्पेण अपूरयत्। दीक्षिताश् च दीक्ष्यमाणाश् च नवा-ऽऽगता अतिथयश् च, आतिथेया आनन्दपुर-वास्तव्याश् च,

श्रीगुरुचरणाश् च, सर्वे समानम् अमोदन्त। आनन्दपुरे सम्पन्नो नव-ग्रन्थि-बन्धः प्राचीन-रूढिभिर् मुक्तम्, एकी-कृत-विविधा-ऽपघनम्, लोक-तन्त्र-सिद्धान्त-समाश्रय-सङ्घटितं च समाजम् असूत। तस्मिन् समाजे न वा कस्याचिदपि पूर्वा जातिः, न वा पूर्वौ वर्णो माता-ऽवमान-हेतुताम् अगच्छत्। तस्मिन् हि समाजे अध्यात्म-सम्बन्धेन सर्वेषां जनकः श्रीगुरुगोविन्दसिंहः, जननी साहेबदेवाँ, अभिजनश् च आनन्दपुरम् अभूत्। समाजोऽसौ सर्व-भूत-हितं परमं धर्मम् अभ्युपगच्छतां सिक्खानां समवायो बभूव। तत्र न कस्यचित् कृते असामान्योऽधिकारः, न जात्युपजाति-श्रेणी-पूगा-ऽऽदि-विभागः, न पुरोधसां वर्गः, न पुरोधसां शासन-तन्त्रम्। श्रीगुरुचरण-सैन्य-बलम् अपि 'सैनिक'–'नायक'-'सेनापति'-प्रभृति-पद-विभाग-शून्यः किल आसीत्। सर्व-सामान्य-सम्पत्ति-भूते तत्र समाजे शिष्यवदेव लब्ध-प्रवेशो गुरुः स्वयं न शिष्येभ्यो व्यत्यरिच्यत। गुरुश् च शिष्याश् च, सर्वे, समानान् एव नियमान् अपालयन्। एकदा मृगया-प्रसङ्गे श्रीगुरुगोविन्दसिंह-भगवत्-पादाः कञ्चन शव-समाधिं अनमन् इव। तद् वीक्ष्य तद्-विषये सिक्खैर् अनुयुक्तास् ते प्रत्यब्रुवन्—"युष्माकं विवेकं विश्वासं मत्-कर्म-विवेचनं च आलोक्य सुतरां तुष्टोऽस्मि।" इति।

आनन्दपुरे "सर्वः सर्वस्य स्वामी। न किमपि कस्यचिद् विशिष्टं स्वम्।" इति विधिर् अविद्यत। सर्वे सर्व-साधारण-भोजन-शालायाम् अभुञ्जत। सर्वे भोजन-शालायां यथा-शक्ति

यथा-रुचि तत् तत् कर्म अकुर्वन् । तत्र कर्म-कृतां मध्यतो भूयिष्ठाः कारव आसन् । स्वम् अभितस् तान् अवलोक्य श्रीगुरुचरणा अत्यन्तम् अमोदन्त । एकदा तैः परिवृताः श्रीगुरुचरणाः 'पिपासुरस्मि । जलमानेतव्यम् ।' इत्यवोचन् । तच्छ्रुत्वा, श्रीगुरुचरणान् अभिवादयितुं तत्र उपस्थितः, कोऽपि श्रेष्ठि-सुत उत्थाय द्रुत-पदं जलम् आनीतवान्, यथा-शिष्टा-ऽऽचारं च श्रीगुरुचरणेभ्यो निवेदितवान् । तस्य अनलसत्वं प्रशस्य श्रीगुचरणैर् उक्तम्ः— "तव मृदू हस्तौ यावदिदानीम् अनभ्यस्त-कार्यौ । तादृग्-कोमलाभ्यां कराभ्याम् आनीतस्य जलस्य ग्रहणं न मम सदृशम् ।" इति ।

आनन्दपुर-निवासिनां मुख्यो जीवन-रसो गुरु-भक्तिः खलु बभूव । केनचिद् भगवद्-भक्तेन :—

"त्वमेव माता च पिता त्वमेव, त्वमेव बन्धुश् च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव, त्वमेव सर्वं मम देव-देव !" इति,

अथवा केनचिद् गुरु-परमदेवकेन :—

"गुरुर् ब्रह्मा गुरुर् विष्णुर् गुरुरेव महेश्वरः ।" इति

यद् उक्तम्, तद् उभयम् अपि वचनम् इह सर्वथा उपपद्यते । गुरुर् एव आनन्दपुर-निवासिनां मते जीवन-व्यापारान् प्रति अपेक्षितस्य उत्साहस्य बलस्य च योनिः, पारमेश्वरिकस्य अनुग्रहस्य उपकाराणां च साधनम् अभूत् । आनन्दपुर-निवासिनः "सहिष्णुत्वम्, क्षमावत्त्वम्, धैर्यम्, शौर्यम्, स्थैर्यं च, यावन्तो

गुणा मानव-लोके सम्भाव्यन्ते ते सर्वे श्रीगुरुगोविन्द-सिंह-भगवत्-पादान् आश्रित्य तिष्ठन्ति।" इति आतिष्ठन्त। श्रीगुरुचरणान् दक्षिणी-भूतान् अवलोक्य सिक्खाः कृतान्तेन सह अपि योद्धुम् उत्सहन्ते स्म——'बलवत्तमोऽपि रिपुर् अस्माभिर् ईषद्-जयः।' इति अभिमन्यन्ते स्म। तदा आशा-श्रद्धा-विश्वासमयेन केनाऽपि मनो-भावेन आनन्दपुर-निवासिनां जीवनं व्याप्यते स्म; आत्मना द्वितीयः सिक्ख आत्मानं स-पाद-लक्ष-सैनिक-बल-धरम् अवबुध्यते स्म; 'कति यूयम्?' इति पृष्टः सिक्ख एकः सन्नपि सर्वदा 'स-पाद-लक्षम्।' इति प्रतिब्रवीति स्म। एवं तदा नूतना बहवः सैनिक्याः शब्दाः प्रचारम् आरूढाः। तेन च सिक्खाः परिमिताम् अपि स्व-शक्तिम्, प्रतिकूलाम् अपि च देश-काला-ऽवस्थां स्व-समाज-भाषित-नव-भाषा-बलेन तृणाय अमन्यत, युद्धा-ऽऽह्वानं कुर्वतां वीराणां सदृश्या ओजस्विन्या भाषया च अवर्णयन्, कीर्त्तिकरान् भोग-प्रदांश् च लौकिक-पदार्थान् लघू-कृत्य नितराम् उपाहसन्। तथा-हि, मरणम् 'खालसायाः (सिक्खस्य) लोका-न्तरा-ऽऽस्कन्दनम्' इति व्यपदेशम् अभजत; रिक्तोदरस्य (क्षुधितस्य) पर्याय-वाची 'ऐश्वर्योन्मत्तः' इत्यभवत्; खाद्या-ऽन्तरा-ऽभावे चणक-भक्षकः 'वातादा-ऽशनः' इत्युच्यते स्म; पलाण्डुः 'रजत-खण्डः' इति, रूप्यकः 'उपल-शकलः' इति, दण्डश् च 'ज्ञाना-ऽऽगारम्' इति सञ्ज्ञाम् अलभत।

खाल्सा-सकाशाद् उद्गच्छतो नव-जीवनस्य मुमुक्षणस्य च वीचयो विष्वग् दूरतरं प्रसृताः, नूतना विचार-विपरिवर्त्त-महा-

मारुतो लोकानां हृदयानि धवितुम् आरभत। अस्य अभिनव-झञ्झा-वातस्य वेगः 'पञ्चापे' विशेषेण अन्वभूयत। तदानीन्तन-भारत-शासकानाम् अन्याय-परायणतायाः कु-पूया-ऽऽचरणतायाश् च हेतोर् अ-शान्ता-ऽऽत्मनां जनानां कृते आनन्दपुरं राज-तीर्थम्, शासकैः कृता धर्म-पीडाः सोढुम् अक्षमाणां कृते च शरणम्, अजायत। ईदृशां शरणार्थिनां मध्ये 'कवरः' इति 'भाईनन्दलालः' इति च द्वौ ख्यात-नामानौ कवी आस्ताम्। हिन्दी-महाकवेः केशवदासस्य आत्मजो बुन्देलखण्ड-वास्तव्यः 'कवरः'माहम्मदीय-धर्म-प्रवेशम् अनङ्गी-कृत्य प्राण-भयाद् आनन्दपुरम् आगतः पद्य-बद्धं प्रार्थना-पत्रं च श्रीगुरुचरणेभ्यो निवेदितवान्। ते सहर्षं तत् स्वी-कृत्य तस्य विपुलं वेतनं निर्धार्य च तस्मै आत्मनः सभा-कविषु पदं प्रदत्तवन्तः। पारसीक-भाषा-महा-पण्डितो नन्दलालस् तारुण्ये एव आनन्दपुरम् आगत्य ख़ालसा-दीक्षां गृहीत्वा च आनन्दपुरा-ऽभिजनो बभूव। अथ न-चिराद् अनन्तरम् असौ अवरङ्ग़ज़ेबस्य ज्येष्ठा-ऽऽमजस्य मुअज़्ज़मस्य सेवकेषु प्रविवेश। एकदा यदा पारसीक-देश नरेशस्य सकाशाद् उपनतस्य पत्रस्य प्रतिवचनं लेखितुं विभिन्नाः पारसीक-भाषा-कोविदा आदिश्यन्त तदा सर्वेषु उत्तरेषु नन्दलाल लिखितम् एव श्रेष्ठतया स्वी-क्रियते स्म। अथ अवरङ्ग़ज़ेबेन विचिन्तितम् :—'ईदृशेन पारसीक-भाषा-पण्डित-धुरन्धरेण माहम्मदीयेन एव भवितव्यम्।" इति। अवरङ्ग़ज़ेब-मनीषा-गन्धम् अवाप्य 'आनन्दपुरं शरणं प्रपद्ये।' इति विचारयन् नन्दलालः स्व-हृदय-गतं रहस्यं ग़्यासुद्दीन-नाम्नः

स्व-माहम्मदीय-सुहृद् आचख्यौ। सम्राज उच्च-पदा-ऽधिकृतः सन्नपि ग़्यासुद्दीनस् तेन सह आनन्दपुरं गत्वा स्वयं तं श्रीगुरु-चरणानाम् अध्यात्म-च्छायां लम्भयितुम् उद्यतोऽभवत्। अथ उभौ चौर-पदम् आनन्दपुरं प्राप्तौ। श्रीगुरुचरणास् तदुचितेन शिष्टाचारेण तौ सम्भावयामासुः।

पारसीकी-भाषा-कवि-पद्धतिम् अनुसृत्य नन्दलालेन आत्मन उपनाम 'गोया' (उत्प्रेक्षा-वाचक 'इव') इति अकियत। तेन ज़िन्दगीनामा, तौसीफ़्-ओ-साना, गंज्नामा, जोत-विकास, दीवान्-ए-गोया, इंशा-दस्तूर्, अर्ज़्-उल्-इल्फ़ाज़् इत्यादयो बहवः पारसीक-भाषा-ग्रन्थाः प्रणीताः। तस्य कृतयः सिक्ख-धर्मे धर्म-ग्रन्था इव आद्रियन्ते, पञ्चम-नानक-श्रीपूज्या-ऽर्जुन-देव-पादानां सम-काल-भवस्य विदुषो गुरुभक्त-सिक्खस्य सदात्मनो भाई-गुरुदासस्य कृतय इव च सिक्ख-धर्ममन्दिरेषु पवित्र-ग्रन्थवत् पठ्यन्ते। तेन वर्णितं श्रीगुरुगोविन्दसिंह-भगवत्-पाद-जीवनेति-वृत्तं भृश-भक्ति-भावा-ऽऽढ्यं वर्त्तते। तस्माद् अनुमीयते यद् भाई-नन्दलालस्य अन्तःकरणं सुतरां भावुकं श्रीगुरुचरणा-ऽनुराग-श्रद्धा-भावना-संभृतं च आसीत्। इति।

यथा श्रीगुरुचरणैः सह भाई-नन्दलालस्य पुनर् योगस् तथा पाटलिपुत्रीयैः कतिपयैः सिक्खैः पुनर् मिलनम् अपि भृशा-ऽऽनन्दकरम् अभूत्। महाराज-फ़तेहचन्द्रमैनी, तस्य भार्या, पण्डित-शिवदत्तश् च इत्येते पाटलिपुत्र-वास्तव्याः श्रीगुरुचरणानां सु-संस्तुता अभूवन्। 'ते आनन्दपुरम् आगन्तारः' इति प्रवृत्तिः

श्रीगुरुचरणानां प्रहर्ष-जननी बभूव। एतेषु पाटलिपुत्र-वासिषु आनन्दपुर-समीपं प्राप्तेषु तान् प्रत्युद्गन्तुं श्रीगुरुचरणा आनन्दपुराद् बहिर् अगच्छन्, तेषां याप्ययानेषु दृष्टि-पथम् अवतीर्णेषु च उपांशु तत्-पृष्ठतो गत्वा उच्चैः 'खाद्' इति अकुर्वन्। पुरा पाटलिपुत्र-निवास-कालेऽपि ते त्रिपथगा-तीरे ध्याना-ऽवस्थितं पण्डित-शिवदत्तम् अनेन विनोद-च्छलेन आनन्दयन्ति स्म। यात्रिकाः प्रथमं भीताः, तत्-परम् 'अस्माकम् अभिनन्दनाय पुराद् बहिर् आगताः श्रीगुरुचरणाः स्वयम् अस्मान् एवं विस्मापितवन्तः।' इति अवबुध्य तेषां वपूंषि हर्षेण पुलकितानि, इन्द्रियाणि प्रेमा-ऽतिरेकेण जडी-कृतानि, लोचनानि च स्नेहा-ऽश्रुभिर् आकुलितानि। अपि च, कतिपय-वर्षेभ्यः पूर्वं तेषां साक्षाद्-देवतया उपास्यो यो गोविन्दो मुग्ध-मुख-मण्डलश् चञ्चलः शिशुर् आसीत्, स इदानीं शालोत्तुङ्गः, व्यूढोरस्कः, वृष-स्कन्धः, परिघ-भुज-दण्डः, निरुपमेन रूपेण तेजसा च उपेतः, सकल-लोक-लोचन-चकोर-चन्द्रो युवा वर्त्तते।' इति अवलोक्य ते गर्वेण आप्यायिताः। श्रीगुरुचरणा-ऽनुरोधात् ते कतिचित् सप्ताहान् आनन्दपुरम् अध्यवसन्; एषु दिवसेषु च पाटलिपुत्र-निवास-स्मृतिर् आभीक्ष्ण्येन श्रीगुरुचरण-सहितानां तेषां मनांसि युगपत् प्रसादं विषादं च अनयत्।

एषु वर्षेषु पार्वत्य-पृथिवीपतयः श्रीगुरुचरणान् प्रति स्पष्टं व्युत्थानम् अविधाय शान्तवद् अतिष्ठन्। श्रीगुरुचरणास् तावत्

सर्व-भूत हित-काम्यया "अमी नृपतयः खालसा-दीक्षाम् आप्नुयुः।" इति ऐच्छन्, तदर्थं च तान् आमन्त्रयन्त। ते, पुनः, मुगल-सम्राड्-भयात् पुरातन-वर्ण-व्यवस्था-दाम-सन्दानिता-ऽन्तःकरणत्वाच्च न तथा कर्तुम् अशक्नुवन्। प्रकामं ते श्रीगुरुचरणेभ्योऽद्रुह्यन्, अथाऽपि श्रीगुरुचरणास् तेषु सुहृद्वद् अवर्त्तिषत। एवं सत्यपि अन्तर्-मनः-प्रद्वेष दग्धा अमी नृपतयः श्रीगुरुचरणैः सह युयुत्सवः सन्तोऽनुकूलाऽवसरं प्रत्यपालयन्। तन्मतेन आनन्दपुरे बलोपचयं विदधानस् तेषां रिपुर् अवश्यं निबर्हणम् अर्हति स्म। एकदा कतिपयैर् एव अनुयायिभिः साकं श्रीगुरुचरणेषु मृगया-विनोदेन उपत्यकायाम् अटत्सु आलिमचन्द्र-बलियाचन्द्रेति नामानौ द्वौ पार्वत्य-परिवृढौ 'महान् अयम् अवसरोऽस्य निग्रहणस्य।' इति मनसा कल्पयित्वा तान् आक्रान्तवन्तौ। कतिपयैर् एव गुरु-सिक्खैः, पुनः, स्व-धीर-वीर-विक्रान्तेन तयोर् मनोरथौ मोघी-कृतः। तस्मिन् संयुगे बलियाचन्द्रोऽहन्यत, आलिमचन्द्रस्य च बाहुर् एकोऽवृश्चत।

वृत्तम् इदं पार्वतीय-नृपाणां साध्वसम् अवर्धयत्। मुगल-सम्राजः साहाय्यं लिप्सवस् ते सम्राजो दिल्लीस्थाय प्रदेशा-ऽधिपाय आवेदन-पत्रं प्राहिण्वन्। स्व-रचिते 'सिक्ख-रिलिज्यन्'-नाम्नि आङ्गल-भाषा-निबद्धे ग्रन्थे एम. ए. मैकालिफ्-महाशयोऽत्र विषये यद् उपन्यस्यति तस्य सारम् इदम्:—

"'गुरुगोविन्दसिंहः श्रीगुरुनानक-पूज्य-पादानां दाय-भाक्।'

इति कृत्वा न वयम् अस्माकं मध्ये तस्य निवासं विप्रत्यपद्यामहि। परं यदा असौ बल-सञ्चयम् अकरोत्, वयं च तं नियन्तुम् अयतामहि, तदा असौ नाहनं गत्वा तत्रत्येन नृपेण सह सख्य-सम्बन्धं कृतवान्। एवं स्व-पक्षं द्रढयित्वा स्व-निवासं प्रत्यागत्य च स श्रीनगर-क्ष्मापतिना फ़तेहशाहेन सह ओजायितुम् उपक्रान्तवान्। तस्य तद् ओजायितं क्रमेण स्फारी-भवद् भंगानी-समीकस्य हेतुताम् अगच्छत्। तस्मिन् रणे बहवो नरा हताः। आनन्दपुरं प्रत्येत्य तेन हिन्दु-माहम्मदीयोभय-धर्माभ्यां व्यतिरिच्यिमाणः ख़ालसा-नामधेयो नवीन एव धर्मः प्रतिष्ठां नीतः। तत्र चातुर्वर्ण्यम् एकी-कृतं भवति। बहवो जनास् तस्य भक्ता अनुयायिनश् च विद्यन्ते। 'यदि नाम यूयं ख़ालसा-दीक्षाम् आप्नुथ तदा इह साम्राज्यम् अमुत्र च मोक्षं प्राप्स्यथ।' इति आशंसता तेन वयम् अपि तत्र दीक्षणाय आमन्त्रिताः। अपि च, स्व-निमन्त्रणे तेन सूचितं यत् सम्राजा मम पितृ-पादा व्यापादिताः। तस्माद् वैर-निर्यातनं चिकीर्षामि। यदि यूयं सम्राजम् अभिद्रुह्य व्युत्तिष्ठथ, तर्हि आत्मनोऽविकलेन बलेन सह अहं युष्मत्-पक्ष्यो भविष्यामि।' इति। न वयं सम्राजम् अभिद्रुह्य व्युत्तिष्ठाम इति कृत्वा अस्मासु प्रकुपितोऽसौ सम्प्रति बहुधाऽस्मान् क्लिश्नाति। तं नियन्तुम् अप्रभवः, तस्माच्च त्राणम् इच्छन्तः, वयं न्याय-परायणम् एतन्मही-महेन्द्रं भवन्तं शरणं प्रपद्यामहे। यदि नाम 'वयम् अपि भवतः प्रजाः।' इति सत्यम्, तदा 'गुरुगोविन्दसिंहस्य आनन्दपुरात् निष्कालनेऽस्मत्-सहायो भवतु भवान्।' इति प्रार्थयामहे। अथ

गुरोर् दण्डने नियमने च यदि भवान् कालम् अनुपालयति, तदा अत: परं स प्रथम भवत: साम्राज्यस्य राजधानीम् अभिषेणयिष्यति ।" इति ।

पार्वत्य-पृथिवीपतीनां तत् प्रार्थना-पत्रम् दिल्लीनो दक्षिणापथ-वर्त्तिने सम्राजे प्राहीयत । श्रीगुरुचरण-दण्डनाय सम्राज आदेशम् उपलभ्य तस्य पैन्दाखानो दीनबेगश् च इति द्वौ 'पाञ्चसहस्रिकौ' सेनाध्यक्षौ स-सैन्यौ आनन्दपुरा-ऽभिमुखौ प्रस्थितौ । तयो रोपड्-नाम-नगरं प्राप्तयोः प्रतिस्व-सैन्य-बलम् आदाय पर्वतीय-नृपास् ताभ्यां समगच्छन्त । एतद् अवगम्य श्रीगुरुगोविन्दसिंह-भगवत्-पादा मुग़लानाम् अभिनिर्यान्ति बलानि योधयितुम् आनन्दपुर-शिलोच्चयाद् अधस्तात् समं भूमि-तलम् आगत्य स्व-सेना-व्यूहम् अरचयन् । तत्र माङ्ग्रामिक्या दृशा विशिष्टानि रण-स्थल पदानि 'पञ्च प्रियेभ्यः' प्रादीयन्त । एकस्य लघ्व्याः सरितम् तीरे मृधम् आरब्धम् । सिक्खा उत्साहेन कौशलेन धैर्येण च अयुध्यन्त । तान् सशपाकतया युध्यमानान् अवलोक्य आगतो भयान् उत्साहयितुं पैन्दाखान उच्चैर् अवोचत् :—"भो भो भटाः ! किं वीक्ष्यते ? रंहसा आक्रामत, 'काफिरान्' (अमाहम्मदीयान्) निहत्य धर्म्ये सङ्ग्रामे विजय लब्ध्वा च 'खुदानन्दस्य' (ईश्वरस्य) प्रसाद प्राप्नुत ।" इति । पुनः पुनर् एवम् उत्साहिता अपि मुगल-सैनिका न पुनः सिक्खान् रणात् पदम् अपि विचालयितु प्राभवन् । पैन्दाख़ानः श्रीगुरुचरणाना समक्ष गत्वा 'भो युद्धे जय-पराजय निश्चयाय आवा द्वन्द्व विदध्व ।' इति मुत्रम् तान्

आह्वयत, 'मा नाम मम प्रहारेण हतस् त्वम् अनुशयीथाः। इति त्वमेव प्रथम मां प्रहरस्व।' इति च सावलेपम् आलपत्।

श्रीगुरुचरणैः प्रत्युक्तम् :—"आत्म रक्षा हेतोर् अह प्रहरामि, नाऽन्यथा। तस्मात् त्वयैव प्रथम प्रहर्त्तव्यम्।" इति।

अथ पैन्दाखानः क्रमेण द्वौ बाणौ श्रीगुरुचरणेषु प्राक्षिपत्। द्वौ अपि सीत्कार कुर्वन्तौ, तेषाम् उष्णीषम् ईषत् स्पृशन्तौ च, अञ्जसा निष्क्रान्तौ। अथ स्व-पर्यायेण श्रीगुरुचरणा नाराचम् अक्षिपन्। आ शीर्षाद् आपाद-तल वर्मितोऽपि पैन्दाखानस् तेषाम् इषुणा कर्णम् आराद् मर्मणि विद्धो भूत्वा अवाङ्मुखम् अश्वाद् भुवि पपात। पैन्दाखान हत दृष्ट्वा तद्-भटाः प्रबलतरेण संरम्भेण सिक्खान् अभ्यधावन्। सिक्खाः, पुनः, अद्रिवद् अचलाः सन्तः समरे प्रभूततरं प्रतिपन्थि-प्रमथन व्यधुः। मुगल पराजयम् उत्प्रेक्ष्य पर्वतीय-नृपतय सङ्ग्रामा-ऽवसानात् प्रागेव ततो विद्रुताः। तस्माद् अनन्तरम् अपि दीनवेगो यावत् काल स्वय विक्षतो भूत्वा योद्धुम् अक्षमो न अभवत् तावत् कालम् अयुध्यत। सिक्खाः पलायमानान् मुगल-सैन्यान्, खिदराबाद-पर्यन्तम्, अन्वधावन्। आत्मनोऽद्भुत-विजय कीर्त्तिं मूर्तयितुं स्थिरयितु च खिदराबादे सिक्खैर् निर्मापित धर्म-मन्दिर यावदद्य मूक-पदैः सिक्ख-शौर्य-यशो-गाथां गायति। 'अपक्रान्तानाम् अनुसरण न युज्यते।' इति प्रबोध्य यदि श्रीगुरुचरणा न सिक्खान् न्यवारयिष्यन् तदा ते दूरतरं मुगल-सैन्यान् अन्वधाविष्यन्। 'अहो! रण-स्थले मम सिक्खानां स्थेमा!'

इति विभाव्य श्रीगुरुचरणानां हृदयं हर्षेण आप्यायितम्। आनन्दपुरं प्रतिनिवृत्त्य ते यथा-विधि धर्म-समागमं विधाय "प्रभो! तव अनुग्रहेण जितम् अस्माभिः। सर्वदा वयं त्वया एवमेव अनुग्रहीतव्याः, सर्वदा च प्रणता वयं त्वाम्।" इत्यादिभिर् वचोभिः परमेश्वरम् अस्तुवन्।

पार्वतेया नृपा आत्मा-ऽवमाननं स्मरन्तो गुप्तम्, यथा-पूर्वम्, श्रीगुरुचरणानाम् अहिता-ऽऽचरणे व्याप्रियन्त। विलासपुर-नरेन्द्रे भीमचन्द्रे पञ्चत्वं गते तदात्मजोऽजमेरचन्द्रः सिंहासनम् आरुरोह। भूयोऽपि सम्राजः साहाय्यं कामयमानाः पार्वत्य-नृपास् तं दौत्ये नियुक्तवन्तः, सम्राजे प्रदेया महार्घा विविधा उपदाश् च प्रगुणितवन्तः। हन्डूर-पतिः, क्षिप्रकारी, भूपचन्द्रो नाम श्रीगुरुचरण-द्विट् तरुणः, पुनर्, अविलम्बेन, अजमेरचन्द्रस्य प्रस्थानात् प्रागेव, आनन्दपुरा-ऽभिक्रमम् ऐच्छत्। तेन उक्तम्:— "दिल्लीतो वा लवपुरतो वा साहाय्य-प्राप्तिं प्रतीक्षमाणा वयं यदि निष्क्रियाः स्थास्यामस् तदा अस्माकं वैरिणोऽनुयायिनां सङ्ख्या अनुदिनं वर्धिष्यते, तया च तस्य शक्तिः। तस्मात् प्रतीक्षा नोचिता। संभूय अभिक्रमणेन अस्माभिर् अवश्यं समितिञ्जयैर् भवितव्यम्।" इति। अथ स्व-मन्त्रणाम् उपसंहरता तेन व्याहृतम्:—"यथा एको नडो भारं सोढुम् अशक्तः। अनेके पूलिताः, पुनर्, न सुखेन भञ्जयितुं शक्याः। तथैव, यदि वयम् अपि संहता भवामः, तदा सिक्खा अस्मान् प्रतिरोद्धुं सर्वथा असमर्थाः स्युः।" इति।

भूपचन्द्रेण स्व-मत पर्वतीय नृप-परिषदि तथा ऊर्जस्वलया वाण्या प्रकाशित यथा दिल्लीं प्रति दूत प्रेषण-विचारः पर्यत्यज्यत, आनन्दपुरा-ऽभिक्रमणस्य सज्जा च प्रारभ्यत । जम्मू नूरपुर-मण्डी-कुलु कअन्थल-गुलेर चम्बा-श्रीनगर-डेढवाल प्रभृति-पर्वत प्रदेश-भूपतयः प्रतिस्व पृतना-परिवृता अत्यन्तीन-गत्या अभिनिर्यान्त आनन्दपुर-तीरोपान्तम् आगच्छन्, 'रणात् प्राग् आनन्दपुरं परिवार्य बाह्येन जगता सह तत् सम्बन्धश् छेद्य. ।' इति च मनसा व्यचारयन् ।

युद्धा-ऽऽक्रमणोपक्रमात् प्राग् अजमेरचन्द्रेण श्रीगुरुचरणेभ्यः पत्रम् एक प्रहितम् । तत्र लिखितम् :—

"अस्माभि. सह विरोध विहाय भवता प्रह्वेन भवितव्यम्, यत्र आनन्दपुरं निर्मित तस्या भूम्या भाटक प्रदेयम्, 'अग्रेऽपि च प्रतिहायन नियमेन तद् दास्यते ।' इति संविद् विधेया । यदि न एतत् सर्वं भवते रोचते तदा भवान् आनन्दपुराद् निर्गच्छतु वा स्व-कर्मणः फलम् आस्वादितुम् उद्युङ्क्ता वा ।" इति ।

श्रीगुरुचरणैस् तत् पत्रस्य समुचित प्रतिवचन प्रेषितम् । तैस् तत्र उपन्यस्तम् :—"मम पितृ-चरणा मूल्य धन प्रदाय इमा भूमिम् अक्रैषु' । तत. पर मूल्य धन युष्माभिः केवल विगृह्य लब्धु शक्यम् । अथ अवलेपम् अपसार्य यूय माम् उपतिष्ठथ चेत्, तदा यद् यद् अभिलषिष्यथ तत् तद् अवाप्स्यथ । किञ्च, 'गुरु-गृह'स्य द्वार सर्वेषा कृते अपावृतम् । अभ्यमित्रीणतां परित्यज्य

ख़ालसा-संस्थाया अनुकूलतां व्रजत । रोचते चेद्, अहं सन्धि-दूतो भविष्यामि ।" इति ।

सिक्ख-धर्मस्य 'गुरु-गृह'स्य च उन्मूलनम् उद्दिश्य संहतेभ्यो नृपेभ्यस् तु सन्धि-प्रस्तावो न अरोचत । दैवात् तदा पख्शसिंहः, गुरुवख़्शसिंहः, भैरोवाला-ऽभिजन-कलालसिंहः, दुनीचन्द्रः इति चत्वारो 'माझा'-प्रदेश-वास्तव्याः प्रवीराम् ततस् तत आगत्य सङ्गतानां पञ्च-शत-सिक्खानां निवहेन अनुगता आनन्दपुरं प्राप्ताः। अमीषां दुष्प्रधर्ष-'माझा'-सिक्खानाम् आगमनेन आनन्दपुरस्य रक्षा-प्रबन्धा द्रढीयस्त्वं गताः । एतेषु 'माझा'-सिक्खेषु दुनीचन्द्रो नाम महाबली नरश् चतुर्थ-पञ्चमोभय-गुरु-चरणानां काले वर्तमानस्य प्रख्यात-भाई-सालो-नाम-सिक्खस्य पौत्रो बभूव । अथ रणे ऽपरिहार्ये सति लोहगढ़स्य रक्षण-भारः शेरसिंह-नाहरसिंहयोः स्कन्धेषु, फ़तेहगढ़स्य च उदैसिंहस्य भुज-दण्डयोर् न्यधीयत । सिक्ख-सांयुगीनाश् च शरैः, शरासनैः, खड्गैः, छुरिकाभिः, यमधरैः (द्विधार-कर्त्तरी-विशेषैः), असिभिः, प्रासैः, कुन्तैः, वृश्चिकैः (तोमर-विशेषैः) शङ्कुभिः, नालिकास्त्रैः, प्रहरणा-ऽन्तरैश् च असज्जन्त । एतस्मिन् अन्तराले राजान आनन्दपुरोपरोधं द्रढयन्तः स्थिताः ।

यद्युतिथं कालं प्रवर्त्तमानोऽपि नगरोपरोधो न सिक्खान् भीषयितुम् अलम् अभूत् । अपि च, सिक्खा-युग्मम् तमिस्रायां द्विषतां निवेशेषु प्रविश्य तद्-यत्न-भ्रंशम् अकार्षुः, तदन्नापा-ऽऽदिकं

च अपाहार्षुः । दुर्ग-भेदनाय कृतान् राज्ञां प्रयासान् निष्फली-कृत्य दुर्ग-रक्षिणः प्रतिपक्षिणां महतीं हानिं व्यधिपत । एषु नक्तङ्कालिका-ऽऽक्रमणेषु चतुर्दश-वर्ष-देशीयः, अजीतसिंहो नाम, श्रीगुरुचरण-सुत आत्मनः साङ्ग्रामिक-साहस-कौशलाभ्यां सर्वेषां प्रशंसा-पात्रम् अभवत् । गत्यन्तरम् अपश्यन्तो राजानो हस्तिना दुर्ग-कपाट-भञ्जनम् ईषत्करं मत्वा सारलोहमयेन कवचेन संवृत-सर्व-शरीरं सुरा-पानेन उन्मादितं च एकं गजेन्द्रं पुरस्कृत्य स्व-समस्त-बलेन लोहगढ़म् आक्रान्तवन्तः । तद् दृष्ट्वा श्रीगुरुचरणा बचित्तरसिंह-नामानम् एकं बृहद्-बलं महावीरं सिक्खं तस्य गजेन्द्रस्य प्रतिरोधनाय आदिशन् । 'अहं श्रीगुरुचरणैः सेवार्थं वृतः ।' इति हृदि मोदमानो बचित्तरसिंहः पुरतो गत्वा तथा तरसा गजेन्द्रं मस्तके प्राहरत् यथा कवचीयां चित्रायसपट्टिकां भङ्क्त्वा तस्य कुन्तो गजेन्द्र-मस्तकम् अविध्यत् । क्षत-विह्वलो वराकः करि-वरः पश्चाद् धावमानोऽनेकान् स्व-पक्ष्यान् सैन्यान् पाद-तलैर् अपिषत् । अथ रणा-ऽऽङ्गणम् अवतीर्य उभयोः सेनयोः शस्त्र-सम्पाते प्रारब्धे द्वयोर् एव पक्षयोर् अनूनो बल क्षयोऽभवत् । अथापि आगन्तुकानां भूयसी हानिर् अभूत् । तथाहि, तेषां जसवाल पतिः केसरीचन्द्रः, गुर्जर-रङ्घड़ोभय-जन-नायको जगतुल्लश् च इति द्वौ महा-शूरौ अहन्येताम् ; काँगड़ा-पतिर् घमंडचन्द्रः, हंडूर-पतिश् च इति द्वौ महा-वीरौ बलवत्-क्षत-विग्रहौ अभूताम् । अन्ततोगत्वा मरण-भीता हताशा उत्तराशा-पतयो रणात् पलायिताः ।

अथ प्रतिपुनर् जातेन अपयशसा सन्दह्यमानो विलासपुर-

नरपालो लवपुर-सरहिन्दोभय-प्रदेश-मुगल-क्षत्रपयोः साहाय्यम् अवाप्य पुनर् आनन्दपुरम् अभ्यर्पेणयत्। आनन्दपुराद् नाऽतिदूरे निर्मोह-नाम-ग्रामं निकषा वृत्ते तुमुले सङ्गरे परन्तपेन सिक्ख-बलेन सहकृताः श्रीगुरुचरणा विपक्ष-चमू-त्रयी-सान्निपातम् अभञ्जयन्। निर्मोह-नाम-ग्रामतोऽग्रे स्थितस्य बसाली-नाम-ग्रामस्य अधिपतिः श्रीगुरुचरण-सुहृत् स्व-प्रदेशे श्रीगुरुचरण-निवासस्य नाथमानो बहुशस् तान् प्रार्थयते स्म। तस्य आमन्त्रणानि स्मरन्तः श्रीगुरुचरणा निर्मोह-ग्राम-युद्धाद् अनन्तरं 'बसाली'-ग्रामाय प्रस्थिताः। परं न तेषाम् इहाऽपि वासस् तद्-द्विपद्भ्योऽरोचत। नाऽतिमहतीं वरूथिनीम् आदाय अजमेरचन्द्रो नाम राजा अत्राऽपि आपतितः; सिक्खैः, पुनर्, इहाऽपि परास्तः। तदानीं यावद् जातेषु सर्व-नाना-रणेषु लब्ध-कीर्त्तिः परम-गुरुभक्तः साहिबसिंहो नाम वीर-सिक्ख इह जाते अभिसम्पाते वीर-गतिं जगाम। अथ श्रीगुरुचरणाः, पुनर्, आनन्दपुरं गताः, कञ्चन कालम् अरिभिर् अनुपद्रुताश् च सुखेन न्यवसन्।

---

# [ ९ ]

## आनन्दपुरं पर्यत्यज्यत

इदानीं तेषु तेषु अहितेषु श्रीगुरुचरणानां क्लेशनाद् विरतेषु आनन्दपुरम् अधिवसतां तेषां सकलोऽपि कालः सिक्ख-धर्म-व्याख्यानेन व्यतीयाय। न शस्त्रि-वृत्तिस् तेषां काल-यापन-व्यापारो वा जीवनोद्देश्यं वा खलु बभूव। अद्यावधि तैः कृतानां युधाम् एकतमस्या अपि हेतुस् तेषां चरिते ऽन्वेष्टुं न शक्यते। अथ च, समरेषु सदा विजय-श्रिया चुम्बित-चरणा अपि ते न जातुचित् जातौ समाजे वा जातां समज्ञाम् अगृध्यन्, न वा धरा-ऽऽधिपत्य-रूपं स्वार्थम् असाधयन्। "जीवनं प्रति रागस्य उद्बोधक उत्साहो नाम यः सात्त्विको गुण-विशेषस् तस्य योनिर् आत्मा, न माया। तस्माद् व्यष्टि-समष्टितया विततस्य सर्वा-ऽऽत्मनो यः श्रेयो-मार्गः स एव परमार्थेन मानव-जीवनस्य परमं लक्ष्यम्।" इति सिक्ख-धर्म-हृदयं श्रीगुरुचरणाः प्रतिपुनः स्मृति-दार्ढ्याय सिक्खानां समक्षं व्यवृण्वन्। "रण-प्रणयी धर्मस् तु तन्मार्गस्य रक्षी, तत्-साधनी-भूत-साध्वाचारस्य च परिचरः।" इति तत्त्वं न कदाचन अपि सिक्ख-धर्मा-ऽनुरागिभिर् उपेक्षितम्।

सम्प्रति कतिचित् शान्ति-क्षणान् उपलभ्य श्रीगुरुचरणा ‘ ’ स्व-चिन्ता-गोचरी-कर्तुं प्रारभन्त। "मम

सिक्खा आहवेषु अद्‌भुतं विक्रमं स्थेमानम् उत्साहं च अदर्शयन्। घोरतमेऽपि सङ्कटे गुरुं प्रति धर्मं प्रति च तेषां श्रद्धा-ऽनुरागौ न लेशतोऽपि अहीयेताम्। ते पराजये नैराश्यं नाऽऽश्रयन्त, विजये च विनयं न अमुञ्चन्त।" इति निभाल्य श्रीगुरुचरणाः सुतराम् अतुष्यन्। ते स्व-भक्तानां पुरत आलमसिंहस्य वीरोदार-चरितं दृष्टान्ततया प्रायेण अवर्णयन्। स हि ख़ालसा-दीक्षायाः प्राप्तेर् अनन्तरं पैतृकीम् आजीविका-वृत्तिम् अभिजन-मूलं गर्वं च सर्वथा अजहात्, नाना-रणेषु कौलीन-भट इव शौर्यं प्रदर्शितवान्, विजयं च अर्जितवान्। श्रीगुरुचरणा बहुशोऽवोचन्:—"ख़ालसा-दीक्षाम् अप्राप्यैव यः सिक्खः केशान् धारयति न स मम प्रीतये भवति।" इति। अपि च, यः सिक्खः शव-समाधिं वा, मिथ्या-देवान् वा, सरवर-गुग्गा-प्रभृतीन् माहम्मदीय-मृत-यतीन् वा अपूजयत्, अनागतं कालं विविदिषन् वा ज्यौतिषिके अतिष्ठत सोऽपि, तेषां मते, न साधु आचरत्। पुनश् च, ते उपदिशन्ति स्म:—"धर्म-ग्रन्थस्य प्रतिलिपिं पाठं वा कृत्वा सिक्खेन द्रव्या-ऽर्जनं न दोषाय; अथाऽपि तयाऽर्जितेन द्रव्येण स आत्म-भरणात् प्राग् दरिद्रान् भर्त्तुम् अर्हति। 'उच्चतरे पदे स्थितोऽयं नीचतरे वा।' इति विचारणाम् अकुर्वन् सिक्खोऽन्यस्मात् सिक्खाद् धर्मोपदेशं गृह्णीयात्। यो हि आत्मानं परमार्थेन मम सिक्खम् अवगच्छति तेन अवश्यं ख़ालसा-दीक्षा ग्रहीतव्या पुण्य-कर्माणि च अनुष्ठातव्यानि। किञ्च, यावत्-कालं सिक्खा रूप-वेषाभ्यां कर्मणा च आत्मानं जना-ऽन्तरेभ्यो व्यतिरेचयन्ति तावत्-कालं तैर् अवश्यं शक्तिमद्‌भिर्

जिष्णुभिः प्रभविष्णुभिश् च भाव्यम् ।" इति ।

पौनः पुन्येन सन्धि-भङ्गे सन्धि-प्रस्तावे च पटु-मतिर् विलासपुर-पतिर् अजमेरचन्द्रः श्रीगुरुचरणेभ्यः सन्धि-प्रस्तावं प्रेषितवान् । तस्य प्रार्थनाम् उररी-कृत्य श्रीगुरुचरणा आनन्दपुरे तद्-दूतस्य वासम् अपि अनुमतवन्तः, गुप्तचरायमाणेऽपि च तस्मिन् प्रेम्णा अवर्त्तन्त । अजमेर-चन्द्रस्य पदा-ऽङ्कान् अनुसरन्तोऽन्येऽपि पार्वत्या राजानः श्रीगुरुचरणैः सह सन्धि-कामा बभूवुः । अथ यदा वार्षिक-सिक्ख-धर्म-महोत्सव-प्रसङ्गात् स्व-कुटुम्बेन सहिताः श्रीगुरुचरणा हिमाचल-खण्डे 'मंडी'-नाम-नगर-समीपे, 'रावलसर'-नाम-ग्रामं गताः, तदा कतिपये पार्वतेया राजानस् तान् उपतस्थिरे, तेषां सदाशय-दाक्षिण्याभ्यां मनसि तद्-वशंवदतां गताश् च प्रार्थयन्त :—"भवतोऽपराद्धा वयं कृपया क्षन्तव्याः ।" इति ।

मानसेन मालिन्येन न मनाग् अपि स्पृष्टाः श्रीगुरुचरणाः 'अस्तु नाम ।' इति क्षमा-वचनम् उक्त्वा 'मम शिविरम् आयात ।' इति तान् आमन्त्रितवन्तः, तेषु तत्र आगतेषु च सौजन्येन तान् सभाजितवन्तः ।

प्रकृत्या वञ्चनाचणः अजमेरचन्द्रस् तु दैवात् नचिराद् उपस्थितेन अनुकूला-ऽवसरेण लोभितः सपदि श्रीगुरुचरणानाम् अभ्यमित्र्यतां गतः । तथाहि, "आलिफ़खान-सय्यदबेग-नामानौ द्वौ मुग़ल-सेनापती, प्रत्येकं पञ्च-सहस्र-योधैः सार्धम्, आनन्दपुराद् नाऽतिदूरेण मार्गेण, लवपुरतो दिल्लीं प्रति प्रतिष्ठेते ।" इति

निशम्य असौ तौ आनन्दपुरा-ऽभियेणनाय प्रार्थितवान्, प्रत्यहं सहस्रेण रूप्यकम् तन्-साहाय्यं च प्रतिश्रुतवान्। तस्य अनुरोधात् ताभ्यां दिल्ली-मार्गः परित्यक्तः, आनन्दपुर-मार्गो गृहीतः। अथ यावत् तौ आनन्दपुरोपकण्ठं प्राप्नुतम् तावत् श्रीगुरुचरणानां परमोदार-पावन-चरितस्य नाना-कथाः आकर्णयतः। ताभिः कथाभिर् धौत-सर्व-किल्बिष इव, लब्ध-नव जीवन इव च, सय्यदवेगोऽभियातृ-चलानि विहाय अभीष्टां दिशं ययौ। ततः सङ्गरे प्रारब्धे, विषमे च उपस्थिते, असौ श्रीगुरुचरण-पक्षं अधीप्सन् रणा-ऽऽङ्गणं प्रत्यावर्त्तत। तद् अवलोक्य विनष्टोत्साह आलिफ़खानः स-सैन्यः सङ्ग्रामाद् विरतः।

सय्यदवेगो मुग़ल-सम्राजः सेवा-भक्ती विहाय श्रीगुरुचरणान् शरणं प्रपन्नः, सर्वं स्वं तेभ्यः समर्पितवान्, मुग़लैः सह संग्रामेषु समीकेषु च यावज्जीवं सिक्ख-सखः समतिष्ठत।

अथ अचिरेण नाना पार्वत्य-नरपतीनां सैन्येभ्यः समुद्गितान् दश-सहस्राणि शूरान् आदाय अजमेरचन्द्र आनन्दपुरम् अभि आययौ। तदा आनन्दपुरे केवला अष्ट शतानि सिक्खा अभूवन्। नगर-रक्षाया उपाया-ऽन्तरम् अनालोक्य ते नगराद् बहिर् निष्क्रम्य सहसा अरीन् अभ्यक्राम्यन्। एवं कृते विपक्षि-पक्षे सङ्क्षोभः समुद्भूतः, सर्व-प्रथमं च अजमेरचन्द्रः अत्रसत्। अन्ये सत्त्वोपपन्ना राजानः, पुनः, रणाद् अविचलिताः स्वस्व चलित-पदान् पदाति-प्रभृति-योधान् युद्ध-भूमिं न्यवर्तयन्

किञ्चित्-कालं तुमुले समाघाते सञ्जाते आक्रान्तारोऽपक्रान्ताः। अस्मिन् रणे आलमसिंहः उदेसिंहश् च महान्तं विक्रमं कृत्वा भूयो यशोऽर्जितवन्तौ। इमं सङ्गरम् उपवर्णयता सैनापत-नाम-कवि-भागधेन अभिगीतम्:—

"पतिंवरा जय-श्रीस् तु तस्मिन् युद्ध-स्वयंवरे।
अवरिष्ट वरेण्याऽपि दिव्यं नरं नरोत्तमम्॥
अवलिप्ताश् च राजानो राज-कन्या-ऽनुचारिवत्।
आत्मा-ऽनीशतयाऽगच्छन् गुरु-वर्यस्य दासताम्॥" इति।

तदानीं यावद् आनन्दपुरं राजकस्य सम्राजश् च तथा चिन्ता-शङ्का-विषयोऽभूद् यथा पुनरपि सम्राज आदेशात् सय्यदख़ानेन अधिष्ठिता एका पृथुः पृतना तस्य परिभवाय समापतिता। बहु-तिथं कालं प्रोष्य बहुषु सिक्खेषु स्व-गृहान् प्रतिनिवृत्तेषु तदा केवलाः पञ्च शतानि सिक्खाः श्रीगुरुचरणान् असेवन्त। तैः सहिताः श्रीगुरुचरणाः शत्रून् पराभवितुं नगराद् बहिर् आगच्छन्। तुमुलं रणम् अभूत्। सिक्खा, यथा-पूर्वम्, वीर-कर्माणि अकुर्वन्। मैमनख़ान-सय्यदबेग-नामानौ श्रीगुरुचरणा-ऽनुरागिणौ माहम्मदीय-वीर-वरौ सिक्ख-पक्षपातिनौ भूत्वा अक्षुद्रं विपक्षि-पक्ष-तक्षणम् अकार्ष्टाम्। सय्यदबेगस् तु स्वर्-लोके श्रीगुरुचरण-सेवा-फलानि भोक्तुम् आतुर इव, अराति-परिवारितोऽपि, बलाराति-पुराय उत्पपात। प्रख्यातं नील-वर्णं स्व-वाहम् आरूढाः श्रीगुरुचरणा वैरिणां व्यूहान् लुनन्तो मुग़ल-सेना-ऽध्यक्षस्य सय्यदख़ानस्य समक्षं प्राप्ताः। सय्यदख़ानः, स्व-स्वसुः— पीरबुद्धुशाहस्य धर्म-पत्न्याः—

मुखात् श्रीगुरुचरणानां पावन-चरितस्य नाना कथाः शुश्राव। तस्मात् स सम्मुखे समागतान् तान् झगिति प्रत्यभिज्ञातवान्, युयुत्सां विधूय, अश्वाद् अवतीर्य, पूज्य-गुरु-चरणां पाद-पद्मं स्पृष्ट्वा च तान् प्रणनाम, तत्-क्षणमेव च रणाद् उपरम्य, शस्त्राऽऽजीव-वृत्तिं परित्यज्य साधु-वृत्तिं स्वी-चकार।

अथ होश्यारपुरा-ऽभ्याश-बस्सी-नाम-ग्रामस्य वासी कोऽपि ब्राह्मण एकदा श्रीगुरुचरणान् उपेतः, रुदंश् च अवदत् :—"मम नवोढा भार्या पठानैर् अपहृता। सा तेषां बन्धनाद् मोचयितव्या मह्यं प्रदातव्या च।" इति। तच्छ्रुत्वा श्रीगुरुचरणाः शत-मात्र-सादिभिः सहितं स्व-तनयम् अजितसिंहं तस्याः मोचनाय तत्-कालं प्राहिण्वन्। सोऽपि महता वेगेन प्रधाव्य, पठान-ग्रामं प्राप्य, प्रसह्य पठान-पाशाद् ब्राह्मणीं विमोचितवान्। स्व-सहधर्मिणीं पुनः प्राप्य तपस्वी ब्राह्मणो भूयिष्ठाभिर आशीर्भिः प्रशस्तिभिश् च युवानम् अजीतसिंहम् अयोजयत्।

एकाधिक-सप्तदश-शततमात् (१७०१) ख्रीष्टाब्दाद् आरभ्य आनन्दपुरं निरन्तरं श्रीगुरुचरण-द्रुहृभिः कृतानि अभियानानि अभ्यवस्कन्दनानि च असोढ। चतुरधिक-सप्तदश-शततमे (१७०४) ख्रीष्टाब्दे, तु, तस्योपरि भीषणतमा आपद् आपतत्। तथाहि, तस्मिन् वर्षे विलासपुर-नरेश्वरः अजमेरचन्द्रः स्वयं दक्षिणापथं गत्वा "गुरुगोविन्दसिंहस्य बल-नाशने भवत्-साहाय्यं प्रेप्सुर् अत्र-भवन्तम् उपेतोऽस्मि।" इत्येवमादि-प्रार्थना-पत्रेण अवरङ्गजेबम्

उपातिष्ठते स्म। तस्य प्रार्थना, अनुदिनं वृद्धिम् उपयतः सिक्ख-धर्मस्य सिक्ख-गुरु-प्रतापस्य च समाचारान् श्रावं श्रावं प्रागेव चिन्तया क्षुब्धस्य, अवरङ्गज़ेबस्य रोषा-ऽग्निं समधुक्षयत्। अथ अवरङ्गज़ेबः सपदि लवपुर-सरहिन्द-प्रदेश-क्षत्रपयोर् आदेशं कृतवान् :—"अविलम्बेन सम्भूय सिक्ख-सैन्यं चूर्ण-पेषं पेष्टव्यम्, सिक्ख-गुरुश् च जीव-ग्राहं ग्रहीतव्यः।" इति।

अवरङ्गज़ेबं तथा आत्मनो दाक्षिणं सिक्खानां च वामं अवगम्य विजयाऽऽशया उल्ललन्तः पार्वतेया नृपतयः स्वानि अनीकानि एकी-कृत्य मुग़ल-बलैः सह संमिलितुम् अत्वरन्त। लवपुर-मुग़ल-क्षत्रपो 'रोपड़'-परिसरे तैः समगंस्त। वैर-शोधनोत्सुके रण-रुहिरुहिकापर्याकुले वज़ीरख़ान-नाम्नि सरहिन्दक्षत्रपेऽधनिम् इदं सर्वं संहतं सर्व पूर्व-बलातिशायि भीमं महा-बलम् आनन्दपुरम् अभ्यपेणयत्। तस्मिन् वत्सरे भूयांसः सिक्खा दीपावली-पर्व मानयितुम् आनन्दपुरम् आगमन्। "विद्विषतां घोरभीषणं सैन्यम् आनन्दपुरं ध्वंसयितुं रभसेन समापतति।" इत्येतां वार्तां निशम्य बहवः सिक्खाः स्व-गृह-प्रतिनिवर्तनेच्छाम् उज्झित्वा तत्रैव अतिष्ठन्। केचित् "सङ्ग्रामेण श्रीगुरुचरण-सेवनस्य दुर्लभोऽयम् अवसरः प्राप्तः।" इति, कतिचिच्च "श्रीगुरुचरण-सेवार्थे युध्यमाना वीर-गतिं गमिष्यामः।" इति विचार्य अमोदन्त। अरीणां रणघोषः, वज्र-निर्घोषवत्, शिलोच्चयान् अपि विदारयन् इव, प्रतिध्वनिना उपगिरि-प्रदेशान् अगुञ्जयत्। सर्वे सिक्खाः सन्नह्यन्ते स्म, भाण्डा-ऽगाराणि च अन्नाद्या-ऽऽदि-

पदार्थानां सङ्ग्रहेर् अपूर्यन्त। अथ सिक्खान् प्रबोधयन्तः श्रीगुरुचरणा अवोचन् :—

"जपति यो हरेर्नाम ध्यायति मधनं तथा।
लोकेऽस्मिन् खलु विज्ञेयं धन्यं तस्यैव जीवितम्॥

क्षणे क्षणे क्षयं गच्छच्छरीरं कस्य शाश्वतम्!
ईश्वरेच्छा-निवासोऽयं देहो यत्नेन कल्प्यताम्।
बुद्धिस् तत्र स्वकीया च दीपिकेव प्रदीप्यताम्॥
*ब्रह्म-विद्या-प्रमार्जन्या मार्ज्यं स्थैर्यं च मानसम्॥" इति।*

अथ :—

"धर्म-वीर-गतिं लोके नित्य-दुर्लभ-कीर्त्तिदाम्।
लभन्ते पुण्यकृद्-वीराः क्वचिदेव न सर्वदा॥

यत्नात् संरक्ष्यमाणोऽपि देहस् तु क्षण-भङ्गुरः।
एकस्मिंश् च परित्यक्ते द्वितीयो लभ्यते स्वतः।
एवं-गते न को दत्त्वा शरीरं वृणुयाद् यशः!"

इति विवेचयन्तोऽनल्पे सिक्खाः श्रीगुरुचरण-सेवार्थं वीर-गति-प्राप्ति-काम्यया रण-मरण-व्यवसाय-सूचकानि केसर-वर्ण-रक्तानि वस्त्राणि पर्यधुः।

भुशुंडीभिः शत्रु-सैन्य-वन-दहनं दहनं वर्षन्तः सिक्खा विपक्षि-समक्षं प्रासर्पन्। ततः सादिनो वेगेन रिपून् अभि अधावन्त, दुर्ग-प्राकार-पृष्ठतः पत्तयश् च नालिका-ऽस्त्रैर् अग्नि-गुलिका-वृष्टिम् आरभन्त। उपगिरि स्थिता वैरिणो ऽधिगिरि स्थितैः सिक्खैः सुव्यवस्थिततया कृतम् अभियोगं सोढुं ना ऽशक्नुवन्। उदैसिंहो

दयासिंहश् च इति द्वौ महा-वीरौ सिक्ख-सेना-नायकौ संरम्भेण अरि-व्यूहान् अवगाह्य बलवत् कदनम् अकुरुताम्।

सिक्खाः शुष्मणा लाघवेन च द्विषतां बलानि व्यस्मापयन्त। "प्राकार-पृष्ठे निर्भयं स्थिताः सिक्खा अस्मासु नालिका-ऽस्त्रैर् वह्निं वर्षन्ति। तस्माद् दुर्गम् एव भञ्जनीयम्"। इति उन्नीय अरि-गणः, प्रभञ्जन इव, जवेन पुरतः प्रासर्पत्। अथ उभयोः पक्षयोर् अन्योन्यस्य निकटम् आगतयोर् अश्वारोहाः पदातयश् च होरा-त्रयम् उरः-प्रतिपेषम् अयुध्यन्त। तदनन्तरं रण-सङ्कुले शिथिले जाते रिपुभिर् अवलोकितं यत् तेषां (मुग़ल-पक्षस्य) नव शतानि योधारो युधि अहन्यन्त। इति। पार्वत्यै राजभिर् असमवेत-जन-सम्मर्दतया व्यपदिष्टं 'सिक्ख-बलं तथा सांयुगीनम्'। इति दुष्प्रत्ययं प्रत्यक्षी-कृत्य मुग़ल-सेना-नायका विस्मयेनं विष्टब्धा बभूवुः।

अन्येद्युर् अपि घोरं युद्धम् अभवत्। उभय-पक्षयोर् बहवो वीरा हताः, न च अन्यतरः पक्षो जयम् आप्नोत्। नीलं वाहम् आरूढाः स्व-सिक्ख-मध्य-गताः श्रीगुरुचरणाः स्वयं शत्रुणा सह अयुध्यन्त। तेषाम् आत्मजः, अजीतसिंहः, सङ्ग्रामे अद्भुतैर् वीर्य-कर्मभिः सुहृदां दुर्हृदां च हृदयानि युगपद् अहरत्।

सायं, रणावसाने, कतिचित् सिक्खाः, सासूयम् इव, श्रीगुरुचरणानां पुरोऽभुवन् :—"कन्हैया-नाम-सिक्खः समर-भुवि न केवलम् अस्मत्-पक्षीयान्, विपक्षि-पक्ष्यान् अपि, आहतान्

जलम् अर्पिप्यत् ।" इति । अथ श्रीगुरुचरणैस् तद्-विषये पृष्टः स सादरं प्रत्यब्रवीत् :—"बाढं प्रभो ! एतैर् यद् उक्तम्, तस्य अर्धं सत्यम् । आयोधन-स्थले यः कोऽपि पिपासुर् जलम् अवाञ्छीत् तस्मै जलम् अदाम् । परं न तत्र मुग़लान् वा सिक्खान् वा अद्राक्षम् । सर्व-मुखेषु गुरु-मुख-प्रतिबिम्बम् एव अहम् ऐक्षिषि ।" इति । तस्य प्रतिवचनम् आकर्ण्य प्रसन्नाः श्रीगुरुचरणास् तम् आशीर्भिर् अयोजयन् सिक्खांश् च अब्रुवन् :—"एष खलु मया उपदिश्यमानं धर्मं सम्यग् बोधति ।" इति ।

"साक्षाद् अभियोगेन शत्रवोऽजय्याः । तस्मात् तेषां नगरम् उपरुध्य तेपाम् अन्नाद्या-ऽऽदि-प्राप्तिर् असम्भवा विधेया । तेन हि दुर्गे सुखं स्थितास् ते कालेन क्षुधा-ऽऽर्त्ता भूत्वा पराजयम् अङ्गी-करिष्यन्ति ।" इति निर्धार्य आनन्दपुरा-ऽऽक्रान्तारो नगरस्य दृढम् उपरोधं व्यधुः । आत्म-रक्षोपाया-ऽनुसन्धानपराः सिक्खाः, पुनः, एतस्मिन् उपरोध-काले अप्रमादं दुर्ग-प्राचीराणि विशोधयितुं द्रढयितुं च प्रारभन्त । श्रीगुरुचरणैः सिक्ख-बलम् अभिनवेन प्रकारेण पञ्चधा विभक्तम्, "सर्वैर् दुर्गा-ऽभ्यन्तरे, सुगुप्त-स्थाने, स्थातव्यम्; रिपुभिः सहसा करिष्यमाणस्य आस्कन्दनस्य विषये च सततम् अप्रमत्तैर् भाव्यम् ।" इति प्रबोध्य च पञ्चानां वर्गाणां मध्यत एकः पञ्च-शत-योध-गणः स्व-तनये अजीतसिंहे आयत्ती-कृतः केशगढ़े च स्थापितः; तावत्-परिमाणो द्वितीयः शेरसिंह-नाहरसिंहयोर् निम्नी-कृतो लोहगढ़े च स्थापितः; आलमसिंहस्य

उदैसिंहस्य च अधिकारे तृतीय आगमपुरस्य आनन्दपुर-परिसराणां च रक्षि-पदे न्ययुज्यत। 'पञ्च-प्रियाणाम्' अन्यतमो मोहकमसिंहो होल-गढ़-गोप्ताऽभूत्। अवशिष्टैः सिक्खैः सहिताः श्रीगुरुचरणाः आनन्दगढ़म् अध्यासत।

अथ मुग़ल-सेनापतिर् उपरोधं यथा यथा-प्रत्यहं द्रढीयांसं चकार, तथा तथा दुर्ग-संश्रितानां सिक्खानां जीवनं दुर्धरम् अभूत्। सञ्चित-राशीनाम् अनुदिनं क्षीयमाणत्वाद् अन्नाद्या-ऽऽदि-पदार्था महा-ऽर्घतां जग्मुः। खाद्य-धान्यं प्रतिसेटकं रूप्यकेण अपि दुर्लभं जातम्। अश्वादीनां कृतेऽपि खाद्यस्य प्रतिदिनं वर्धमानोऽभावो दुर्गाश्रयिणां भृश-चिन्ताकरोऽजायत। गत्यन्तरम् अनालोकयद्भिः सिक्खै रात्रौ शत्रु-शिविरेषु प्रविश्य अन्नाद्यादिकस्य आहरणं प्रारब्धम्। अथ रिपुभी रक्षा-प्रबन्धेषु द्रढितेषु, प्रतिनिशं शत्रु-शिविर-प्रविष्टानां सिक्खानां मध्यतः केषुचिद् हन्यमानेषु च, तदपि दुष्करम् अभूत्। किञ्च, आनन्दपुरे पेयं जलं एकस्या लघ्व्या गिरिणदीतो लभ्यम् आसीत्, न कूपादितः। अजमेरचन्द्रस्य पुरुषैस् तत्-स्रोतो-दिक् परिवर्त्तिता। ततः सिक्खानां पेय-जला-ऽऽहरणम् अपि अनीषत्-करं जातम्। नक्तं यदा चत्वारः सिक्खा जलम् आहर्त्तुम् अगच्छन् तदा द्वौ जलम् आहरतां द्वौ च रिपु-प्रहरिभिः सह अयुध्येताम्।

एवं घोर-विषमे समुपस्थिते, दुर्ग-सन्निरुद्धाः सिक्खाः, खाद्य-धान्य-सङ्ग्रहे क्षीयमाणे तरु-त्वक्-चूर्णेन मिश्रम् अन्ना-ऽऽहारं

केवल-पर्णा-ऽऽहारं च अकुर्वन्। तस्मिन् अपि दुरापे जाते केचित् सिक्खाः श्रीगुरुचरणान् उपेत्य "साम्प्रतम् आनन्दपुरस्य त्यागं वयं यथा काल-करणीयं समर्थयामः।" इति न्यवेदयन्। प्रस्तावः, पुनर्, अयं "न साम्प्रतम्।" इत्युक्त्वा श्रीगुरुचरणैः प्रत्याख्यातः। केचित् सिक्खाः श्रीगुरुचरणानां भक्तिं विहाय, तेषाम् अनुमत्या, आनन्दपुराद् निष्क्रान्ताः। केचित् तु निष्क्रमण-काले "न वयं गुरु भक्ताः।" इति स्व-निश्चयं पत्रम् आरोप्य स्व-हस्ताक्षराणि च तत्र कृत्वा तत् त्याग-पत्रं श्रीगुरुचरणेभ्यो ददुः।

तदन्तरे सम्राजः, तृत-सेनापतीनां च, राजकस्य च सकाशात् सन्देशः प्राप्तः—"यदि गुरुर् आनन्दपुरं जहाति, अन्यत्र च जिहीते, तदा नगरोपरोधाद् उपरम्य सर्व-सैन्य-बलानि यथा-ऽऽगतं प्रतिनिवर्तिष्यन्ते।" इति। शत्रुभि स्व-धर्म-ग्रन्थेन शप्त्वा उक्तम्:—"निष्क्रामन् गुरुर् वा कोऽपि सिक्खो वा न कथमपि कदर्थयिष्यते।" इति। "न अमी मम दुर्हृदः स्व-वचनं पालयिष्यन्ति।" इति विदन्तोऽपि श्रीगुरुचरणाः, अन्नादिकस्य प्रकामा-ऽभावे जायमाने, सिक्खैर् विविधासु सुदुस्सहासु पीडासु अनुभूयमानासु च, आनन्दपुर-त्यागम् एव साधुम् अमन्यत। चतुरधिक-सप्तदश शततमस्य (१७०४) ख्रीष्टाब्दस्य अवसाने प्रत्यासीदति सति तैर् निष्क्रमणं प्रारब्धम्। पूर्वं तेषां जननी, यवीयांसौ सुतौ, पत्न्यौ, योद्धुम् अशक्ताः पुरुषाः इति एतेषां समूहो निष्क्रान्तः। अथ स्वयं निष्क्रामन्तः श्रीगुरुचरणाः

स्वन्तातपादानां समाधिम् उपेत्य प्रार्थनाम् उपास्य, गुरुबख़्श-नामानम् 'उदासि'-सम्प्रदाया-ऽनुयायिनं सिक्खं तत्-स्थानस्य अवेक्षितृतया नियुज्य, स्व-वाहम् आरुह्य, पुरो दयासिंहेन उदैसिंहेन च, वामतः 'पञ्चाभिर् मुक्तैः', दक्षिणतो मोहकमसिंहेन, पश्चिमतो ज्यायोभ्यां सुताभ्यां हिम्मतसिंहेन च, परिवृताः, सर्वे पृष्ठतः प्रायशः पञ्च-शतैः सिक्खैर् अनुगम्यमानाश् च आनन्दपुराद् निष्क्रान्ताः ।

---

[ १० ]

## चमकौरे सरहिन्दे च वीर-गति-प्राप्तिः

जड-जङ्गम-जगति विश्रमाय रजन्याः अङ्कम् अधिशयिते, "श्रीगुरुचरणैः परित्यक्तस्य मम कस् त्राता ?" इति चिन्तया इव विचेतनी-कृतम् आनन्दपुर-दुर्गं करुणा-स्नेह-परिप्लुतेन चक्षुषा पश्चिम-वारं वीक्ष्य तरु-च्छाया-ऽन्धकारे प्रसर्पन्तः श्रीगुरुचरणा आनन्दपुरतः 'पञ्चापस्य' निर्गिरि-प्रदेशेभ्यः प्रस्थिताः। ते प्रायेण त्रिंशद् वर्षाणि आनन्दपुरम् अध्यवसन्। अत्र स्व-पितृ-चरणानां श्रीगुरुतेगबहादुर-भगवत्-पादानां वात्सल्यच्छायायां तेषां शैशवम् अतीतम्; अत्र ते श्रीगुरु-नानक-भगवत्-पादानां धर्म-दायं लब्ध्वा नाना-कर्त्तव्य-भार-दुर्धरां धर्म-धुरं स्कन्धौ आरोपितवन्तः; अत्र ते स्व-व्यक्तौ बलवद् अनुरज्यतः सिक्ख-समाजस्य अध्यात्म-पुरोगतां गताः; अत्र ते काव्यं प्रणीतवन्तः, अन्वहं चिराय विश्वात्मना सह योगस्य रहस्यमयम् आनन्दम् अनुभूतवन्तः, स्व-सिक्खैः सह अक्रीडन्, गिरि-गह्वरेषु अधित्यकोपत्यकासु च स्वैरं व्यचरन्, शस्त्रा-ऽस्त्र-विद्यायां प्रौढिं प्राप्नुवन्, स्व-बलं च बलिनां वीराणां बलेन अतोलयन्। अत्र तेषां मनोरथाः पूर्त्तिम् अगच्छन्; अत्र तेषां हृदयेऽसौ विचार-तरङ्ग उदियाय यो भारतीय-प्रजानां मध्यतो वह्वीनां रूपा-ऽन्तरं व्यधात्। अथ साम्प्रतं तथा-विधायां विश्वेतिहास-दुर्लभायां सङ्कट-ऽवस्थायाम्

आनन्दपुरस्य त्यागो यदि तेषाम् अरुन्तुदोऽभवत् तदा किमु विचित्रम्! आनन्दपुरस्य त्यागः, पुनः, यथा ते अन्तरात्मनि अन्वभवन्, कस्यचिद् महतः प्रयोजनस्य सिद्धये अभूत्।

अथ ये 'विस्रब्धं निष्क्रम्यताम्।' इति स-शपथं प्रतिश्रुतवन्तः, ते एव नगराद् निष्क्रम्य नाऽतिदूरं गतान् श्रीगुरुचरणान् तत्-सहयायिनश् च अन्वधावन्। श्रीगुरुचरणानां तनयेन यूना अजीतसिंहेन अधिष्ठितं पार्ष्णि-रक्षि चलं तैः सह अयुध्यत। शत्रु-पक्षं बलवत्तरं वीक्ष्य बहु-युद्ध-विजयी उदैसिंहो नाम प्रवीरः अजीतसिंहं, सा-ऽनुनयं, स्थला-ऽन्तरं ग्राहयित्वा, प्रतिभटान् प्रतिरुन्धानः, तैः सह शूरयमाणः, वीर-गतिं जगाम। एवम् अनुधावमानैः रिपुभिः सह रणं कुर्वाणैः स्व-भक्तैः परिरक्ष्यमाणाः, कुटुम्बेन सहिताः, श्रीगुरुचरणाः, क्रमेण अग्रे सरन्तः सरसा-नाम्नीं स्रोतस्विनीं प्राप्ताः। सा च सरित् तदा न केवलं शरद्-वृष्टिभिर् जनितस्य जलौघस्य हेतोर्, हिमायमानस्य——स्पर्शमात्रेण गात्राणि संस्थानानि कुर्वतः——जलस्य अपि कारणाद् दुरवगाहा दुस्तरा च अभूत्। अथापि दन्दशूका-ऽधमैर् द्विपद्भिर् अनुधाव्यमानाम् ते, मार्गा-ऽन्तरम् अपश्यन्तः, ताम् उत्तरीतुम् अयतन्त। हन्त तस्यां शरत्-तम्यां तां 'वैतरणीम्' उत्तरन्तोऽस्तोकाः श्रीगुरुचरणा-ऽनुरक्ताः सिक्खा असुभिर् अमुच्यन्त! जल-पूरेण स्वैरम् उह्यमाना ये पारे-सरितं यत्र वा तत्र वा प्राप्ताः, ते तमिस्रा-तमसि, पुनः, सह-मार्गं लब्धुम्, 'क्व गन्तव्यम्?' इति च निर्धारयितुम्, अशक्नुवन्तः, यूथ-भ्रष्टा दन्तिन इव,

दिशि च विदिशि च गन्तुं प्रवृत्ताः। श्रीगुरुचरणानां यवीयोभ्यां तनुजाभ्याम्, ज़ोरावरसिंह-फ़तेहसिंहाभ्याम्, सहिता गुरु-जननी माता-गूजरी, दैवाद् गंगु-नामानं स्व-पुरातन-भृत्यम् अपश्यत्। स हि कुशल-पूर्वकं तान् स्व-ग्रामम् अनयत्। तथा च, दिल्ली-वास्तव्यः कोऽपि गुरु-भक्त-सिक्खो गुरु-धर्मपत्न्यौ निरापदं स्थानम् अनैषीत्। अजीतसिंह-जुझारसिंह-नामानौ ज्यायांसौ गुरु-सुतौ चत्वारिंशन्मात्र-सिक्खाश् च श्रीगुरुचरण-सङ्ग-लग्ना अतिष्ठन्।

दिल्लीत आगतानि प्रत्यग्र-सैनिक-वरूथानि, तत् तत् स्थानम् अधिवसन्तो रंघड़ा गुर्जराश् च, श्रीगुरुचरणान् अनुधावमानानां मुग़ल-बलानां साहायकम् अन्वतिष्ठन्। तेषु परितः समीपम् आगतेषु श्रीगुरुचरणाश् चमकौर-नाम्नि ग्रामे एकस्य स्व-भक्तस्य मृत्तिका-गृहं दुर्गं मन्यमाना, आलमसिंह-मानसिंहौ द्वार-रक्षणे नियुज्य स्व-तनयाभ्यां दयासिंह-सन्तसिंहाभ्यां च सहिताः शिखरा-ऽट्टालिकायां स्थिताः।

नभस्ये नभः अभ्राणि इव, संहतानि रिपु-बलानि 'चमकौर'-ग्रामम् उपरुन्धन्ति स्म। इमं ग्रामोपरोधं वर्णयन् कश्चित् कविर् आह स्म:—"नक्षत्रैर् क्षपाकरो यथा, रिपुभिर् गुरुः परिवारितः।" इति। पार्ष्णि-ग्राहेषु भटेषु निकटतरम् आयातेषु चत्वारिंशत् सिक्खा अष्ट-पञ्चकेषु विभक्ताः। तदनन्तरं क्रमेण एकैका सिक्ख-पञ्चतयी महता रिपु-भट-वरूथेन सह योद्धुम् आरभत।

तद् युद्धं सिक्ख-विक्रमस्य किमपि ऐन्द्रजालिकं खलु अभूत्। अहंपूर्विकया सिक्खा रणाय निरगमन्; न च तेषाम् एकोऽपि रणाद् भीतो वा पलायितो वा। कोऽपि हृदय-द्रावकः खलु स काल आसीद् यदा सप्तदश-वर्ष-देश्यः अजीतसिंहः, चतुर्दश-वर्ष-देशीयो जुझारसिंहश् च, सिक्ख-धर्मं पालयिष्यन्तौ——धर्म-वीर-गतिं गमिष्यन्तौ——पितृ-पादान् प्रार्थयेताम्:——"आवयोर् अपि युद्ध-गमनम् अनुमन्यताम्।" इति। श्रीगुरुचरणाश् च 'गम्यताम्।' इति तयोर् गमनम् अन्वमन्यन्त, धर्म-युद्धे च क्रमेण तयोर् धर्म-वीर-गति-प्राप्तिम् अवलोक्य "त्वदीयं वस्तु विश्वेश! तुभ्यमेव समर्पये।" इत्येवं-विधैः शब्दैः परमात्मानं प्रति तदुपकृति-स्मृतिं प्राकाशयन्।

तादृश-नाना-रण-विजेता, अजीतसिंहेन अधिष्ठिते धर्म-वीर-सिक्ख-पञ्चकेऽन्तर्भूतः, आलमसिंहोऽपि धर्म-वीर-गतिं गतः। तत्र सङ्ग्रामे कतिपयैः सिक्ख-प्रवीरा-ऽन्तरैः साकं 'पञ्च-प्रियाणां' मोहकमसिंह-हिम्मतसिंहौ, पञ्चैव 'पञ्च मुक्ताः' च धर्म-वीर-गतिं प्रापुः। एकैकः सिक्खः संशप्तको भूत्वा बहून् प्रतिभटान् हत्वा च रणे प्राणान् अमुञ्चत्। श्रीगुरु-तनुजन्मानौ, अजीतसिंह-जुझारसिंह-नामानौ, अनतिक्रान्त-पौगण्डौ अपि, प्रौढ-प्रवीरवत् अद्भुतं पराक्रमम् अकुरुताम्। अजीतसिंहस्य अजय्यत्वं सिंहत्वं च उपश्लोकयन् कश्चित् कविर् अवोचत्:——"असौ सिंह-किशोरः प्रासेन प्रभूतान् पठानान् प्राणेभ्योऽमोचयत्, प्रासे भग्ने च बहून्

तरवारि-धारायां न्यमज्जयत् ।" इति। प्रतिरोधं प्रभिन्दन्, जुझारसिंहः——योधृसिंहः——मुग़ल-सैनिक-निकरम्, नक्रः सिन्धु-पूरम् इव, निर्बाधं दूरम् अगाहत ।

अल्पिष्ठैरपि सिक्खैः क्रियमाणं मुग़ल-महा-भट-सङ्क्षयं वीक्ष्य रक्ता-ऽक्षः सन् लवपुर-क्षत्रपः महता बलेन आक्रम्य सिक्ख-पक्षम्, बाल-पादपोपवनं वात्या-चक्रम् इव, एक-पदे ध्वंसयितुम् अचेष्टत। श्रीगुरुचरणैस् तेषां सहायैश् च कृतः शरा-ऽऽसारः, पुनः, तस्य तं धावं वन्ध्यं व्यधात्। नाहरखानो नाम मुग़ल-सेना-नायक-विशेषो गृह-भित्तिम् आरोढुम् अयतत, श्रीगुरुचरण-बाणेन तु न्यपात्यत। सिक्खेषु क्रमेण एकैकशो वीर-गतिं गच्छत्सु वासरा-ऽवसाने केवलाः पञ्च सिक्खा अवशिष्यन्ते स्म। सङ्कटं निवारयितुम् अशक्यं समर्थ्य ते पञ्च साहसम् आधाय श्रीगुरुचरणानां न्यवेदयन् :—"सत्य-प्रभो ! श्रीचरणा म्रियन्ते चेत्, खालसा-संस्था म्रियते, ध्रुवश् च तस्याः पुनः पोषः। तस्माद् ग्रामस्य अस्य त्याग एव वरम् ।" इति। "निरतिशयानि नाम सङ्कटानि स्युः; नाऽहं रणाद् उपरंस्ये।" इति अध्यवस्यन्तोऽपि श्रीगुरुचरणाः 'पञ्च-सिक्ख'-निर्णयं शिरसा धारयन्तो "बाढम् ।" इति अभणन्।

अथ सन्तसिंह-संगतसिंहौ कोटे अस्थाताम्, दयासिंह-धरमसिंह-मानसिंहाः श्रीगुरुचरणान् अनुयाताः। कोटस्य द्वाराद् बहिर् आगत्य एव श्रीगुरुचरणा इषुभिः रिपु-वलय-प्रदीपान् निरवापयन्।

तेन प्रतिपक्षि निवेशे सङ्क्षोभः समुत्पन्नः; श्रीगुरुचरणाश् च अरिभिर् असबाधितास् ततो निष्क्रान्ताः। विभावर्यां प्रभातायां पुनर् युद्धम् आरभ्यत। पैङ्गनिक पिञ्जनेन तूलं यथा कोट स्थित सिक्ख-युग्म विशिखैः प्रतिभटान् अपिञ्जयत्। अथ न चिराद् मुगल-चम्वा कोटे निकटतया परिवेष्टिते, सम्प्रहारे च अशक्ये जाते शत्रवो निरुपाय-भूतयोर् दुष्प्रधर्षयोस् तयोर् वीर पुङ्गवयोः शिरसी अच्छिन्दन्, तयोर् मध्यतः सन्तसिंह गुरुगोविन्दसिंहतया बोधन्तश् च छिन्ने शिरसी सम्राज उपहारी-कृत्य पुरस्कार-प्राप्ति प्रत्याशया प्रामोदन्त। अथ 'तयोः सिक्ख महावीरयोर् न अन्यतरो गुरुगोविन्दसिंहः।' इति विदिते मुगल-सेनापतिर् बलवद् नैराश्यम् आगतः।

चतुराधिक-सप्तदश-शततमे (१७०४) खीष्टाब्दे दिसम्बर मासस्य द्वाविंशे दिवसे 'चमकौर'-युद्ध सववृते। तत किञ्चित् कालाद् ऊर्ध्वं पारसीक-भाषा निबद्धे, अवरङ्गजेब प्रति प्रहिते, स्व पत्रे श्रीगुरुचरणैर् विन्यस्तम् :—

"परिगणयितुं दु शकैः प्रतियोधैः सहसा अभ्यवस्कन्दिता क्षुत् क्षामा अगतिका चत्वारिंशत् सिक्खा किमु वा अन्यत् अकरिष्यन्। शपथेन विस्रम्भम् उत्पाद्य अपि परिपन्थिन एक पदे खड्गैः पृषत्कैर् नालिकाऽस्त्रैश च तान् प्रहर्तुं प्रारभन्त। विवशोऽहं रण गत, यथा-शक्ति यथा-ऽभ्यास च, प्रतिभटान् अयोधयम्। गत्यन्तराऽभावे कृपाण-धारण न अधर्म्यम्।

कृष्ण-वस्त्र-परिधायिनी भवतः अनीकिनी, सरघा-वरूथिनी इव, विरावं विदधती अस्मान् अभ्यधावत्। भवतो योधेषु यः कश्चित् स्व-प्रतिरक्षा रेखाम् अतिक्रम्य मम स्थिति-पदम् आक्रमितुम् अग्रे आगच्छत् स मदायुधेन हृत-प्राणः स्व-शोणित-कुण्डे न्यमज्जत्। ये, पुनर्, भवतः सैनिका न तां रेखाम् अत्यक्राम्यन् ते न अस्मत्-प्रहरण-लक्ष्यताम् अगच्छन्। 'ख्वाजः' क्वचित् प्रच्छन्नोऽतिष्ठत्, न वीरवत् पुरत आगच्छत्। यदि नाम अहं तस्य मुखम् अद्राक्षम्, असंशयं तम् अपि स्व-शरस्य शरव्यताम् अनेष्यम्। उभयोर् एव पक्षयोर् बहवो भटा नालिकास्त्र-गुलिकाभिर्, इषुभिश् च हताः, भूमिश् च रुधिरेण रञ्जिता। रण-भुवि कृत्त-शिरो-बाहूनां राशयः क्रीडा-क्षेत्रे पतितानां क्रीडायष्टि-कन्दुकानाम् उच्चया इव बभुः। इषूणां सीत्कारेण, इष्वासानां टङ्कारेण, शूराणां हुङ्कारेण च व्योम-तलम् अगुञ्जत्, अप्रतिभट-भटस्य च अपि हृदयम् अकम्पत। इत्थं-गते वीर-वरा अपि केवलाश् चत्वारिंशत् सिक्खाः कथं नाम सङ्ख्या-ऽतीतान् विपक्ष-सैनिकान् पराभवितुं प्राभविष्यन्! अथ यदा दिनमणिः पश्चिमा-ऽचल-सानु-पृष्ठे तिरोधानं गतः, रजनी-राज्ञी च स्व-समस्त सौन्दर्यं विवृण्वती लोक-लोचनाभिमुखी बभूव तदा परमेश्वरः, यस् तत्र रणे मम रक्षकोऽभूत्, मां शत्रु-त्रास-विहीनं मार्गम् अदर्शयत्।" इति।

श्रीगुरुगोविन्दसिंह-भगवत्-पादैः 'चमकौर'-ग्रामे संवृत्ते धर्म्य-युद्धे धर्मस्य स्वातन्त्र्यस्य च हेतोर् द्वौ सुतौ बली-कृतौ।

तेन प्रतिपक्षि-निवेशे सङ्क्षोभः समुत्पन्नः; श्रीगुरुचरणाश् च अरिभिर् असंबाधितास् ततो निष्क्रान्ताः। विभावर्यां प्रभातायां पुनर् युद्धम् आरभ्यत। पैञ्जनिकः पिञ्जनेन तूलं यथा कोट-स्थितं सिक्ख-युग्मं विशिखैः प्रतिभटान् अपिञ्जयत्। अथ न-चिराद् मुग़ल-चम्वा कोटे निकटतया परिवेष्टिते, सम्प्रहारे च अशक्ये जाते शत्रवो निरुपाय-भूतयोर् दुष्प्रधर्षयोस् तयोर् वीर-पुङ्गवयोः शिरसी अच्छिन्दन्, तयोर् मध्यतः सन्तसिंहं गुरुगोविन्दसिंहतया बोधन्तश् च छिन्ने शिरसी सम्राज उपहारी-कृत्य पुरस्कार-प्राप्ति-प्रत्याशया प्रामोदन्त। अथ 'तयोः सिक्ख-महावीरयोर् न अन्यतरो गुरुगोविन्दसिंहः।' इति विदिते मुग़ल-सेनापतिर् बलवद् नैराश्यम् आगतः।

चतुराधिक-सप्तदश-शततमे (१७०४) खीष्टाब्दे दिसम्बर-मासस्य द्वाविंशे दिवसे 'चमकौर'-युद्ध संववृते। ततः किञ्चित्-कालाद् ऊर्ध्वं पारसीक-भाषा-निबद्धे, अवरङ्गज़ेबं प्रति प्रहिते, स्व-पत्रे श्रीगुरुचरणैर् विन्यस्तम्:—

"परिगणयितुं दुःशकैः प्रतियोधैः सहसा अभ्यवस्कन्दिताः क्षुत्-क्षामा अगतिकाः चत्वारिंशत् सिक्खाः किमु वा अन्यत् अकरिष्यन्। शपथेन विस्रम्भम् उत्पाद्य अपि परिपन्थिन एक-पदे खड्गैः पृषत्कैर् नालिका-ऽस्त्रैश् च तान् प्रहर्तुं प्रारभन्त। विवशोऽहं रणं गतः, यथा-शक्ति यथा-ऽभ्यासं च, प्रतिभटान् अयोधयम्। गत्यन्तरा-ऽभावे कृपाण-धारणं न अधर्म्यम्।

कृष्ण-वस्त्र-परिधायिनी भवतः अनीकिनी, सरघा-वरूथिनी इव, विरावं विदधती अस्मान् अभ्यधावत्। भवतो योधेषु यः कश्चित् स्व-प्रतिरक्षा-रेखाम् अतिक्रम्य मम स्थिति-पदम् आक्रमितुम् अग्रे आगच्छत् स मदायुधेन हत-प्राणः स्व-शोणित-कुण्डे न्यमज्जत्। ये, पुनर्, भवतः सैनिका न तां रेखाम् अत्यक्राम्यन् ते न अस्मत्-प्रहरण-लक्ष्यताम् अगच्छन्। 'ख़्वाजः' क्वचित् प्रच्छन्नोऽतिष्ठत्, न वीरवत् पुरत आगच्छत्। यदि नाम अहं तस्य मुखम् अद्राक्षम्, असंशयं तम् अपि स्व-शरस्य शरव्यताम् अनेष्यम्। उभयोर् एव पक्षयोर् वहवो भटा नालिकास्त्र-गुलिकाभिर्, इषुभिश् च हताः, भूमिश् च रुधिरेण रञ्जिता। रण-भुवि कृत्त-शिरो-बाहूनां राशयः क्रीडा-क्षेत्रे पतितानां क्रीडायष्टि-कन्दुकानाम् उच्चया इव बभुः। इषूणां सीत्कारेण, इष्वासानां टङ्कारेण, शूराणां हुङ्कारेण च व्योम-तलम् अगुञ्जत्, अप्रतिभट-भटस्य च अपि हृदयम् अकम्पत। इत्थं-गते वीर-वरा अपि केवलाश् चत्वारिंशत् सिक्खाः कथं नाम सङ्ख्या-ऽतीतान् विपक्ष-सैनिकान् पराभवितुं प्राभविष्यन्! अथ यदा दिनमणिः पश्चिमा-ऽचल-सानु-पृष्ठे तिरोधानं गतः, रजनी-राज्ञी च स्व-समस्त सौन्दर्यं विवृण्वती लोक-लोचनाभिमुखी बभूव तदा परमेश्वरः, यस् तत्र रणे मम रक्षकोऽभूत्, मां शत्रु-त्रास-विहीनं मार्गम् अदर्शयत्।" इति।

श्रीगुरुगोविन्दसिंह-भगवत्-पादैः 'चमकौर'-ग्रामे संवृत्ते धर्म्य-युद्धे धर्मस्य स्वातन्त्र्यस्य च हेतोर् द्वौ सुतौ बली-कृतौ।

एकस्मिन् एव दिने क्रमशः सप्तदश-चतुर्दश-वर्ष-देश्यौ, कोमलाऽङ्गौ, अजीतसिंह-जुझारसिंहौ 'एकम् अनु अपरः' इति क्रमेण शोणित-प्लुतं रण-स्थलम् अगच्छताम्, यथा-क्रमं च अल्पेन कालेन, स्व-जनकस्य पश्यतो वीर-गतिम् आप्नुताम्। समस्त-मानवेतिहासेषु यानि अवदाततमानि सुदुष्कर-वीर्य-कर्माणि श्रूयन्ते तेषु गणेयानि तयोर् बालकयोर् बल-वीर्य-कर्माणि विलोक्य श्रीगुरुचरणा अमोदन्त।

'चमकौर'तो नाऽतिदूरेण 'सरहिन्द'-नगरे तत्-सप्ताहाऽन्तराले एव च श्रीगुरुचरणानाम् अन्यौ सुतौ, क्रमेण अष्ट-षड्-वर्ष-देशीयौ, अग्रज-द्वयवत्, धैर्येण स्थैर्येण च वध्या-पुरुषस्य खड्ग-तले स्व-कण्ठौ दत्तवन्तौ। तयोर् निरुपम-त्यागस्य सत्य-साक्ष्यस्य च कथा तथा हृदय-द्राविका यथा सताम् आचारस्य दशा पुण्या उज्ज्वला च।

गंगुर् नाम यः श्रीगुरुचरण-पुरातन-भृतकः 'सरसा'-सरितायाः सङ्कटाद् अनन्तरं ज़ोरावरसिंह-फ़तेहसिंहाभ्यां सहिताया माता-गूजर्याः सहायताम् अगच्छत् स एव स्व-ग्रामे विश्वासघ्नतां गतः। तथाहि, गंगोर् गृहं प्राप्य तस्य आतिथेयत्वेन च परितुष्य माता-गूजरी रात्रौ स्व-पौत्रौ कण्ठेन आश्लिष्य वलभ्यां प्रसारितम् आस्तरणं सविस्रम्भं निःशङ्कं च अध्यशेत। दुष्कर-यात्रा-परिश्रान्तायां तस्यां गाढ-निद्रां गतायां गंगुः तस्यास् तत्-तद्-वस्तुजात-मध्ये निक्षिप्तां द्रव्यधानीम् अमुष्णात्। प्रभाते प्रबुद्धा सा यदा तां तत्र अनवलोक्य

अब्रवीत् :—"मम द्रव्यधानी मुषिता।" इति तदा गंगुः सकोपम् आह स :—"अहो नु राज-द्रुहां सहायतां शरण्यतां च गत्वा अहं स्तेनत्व-दोषा-ऽऽरोप-रूपम् एतत् सुफलम् अवाप्तवान् !" इति।

एवं तार स्वरं स्वैरं यद् वा तद् वा ब्रुवन् असौ गृहाद् निष्क्रम्य ग्रामण्यम् उपेत्य च व्याजिज्ञपत् :——"गुरुगोविन्दस्य माता सुतौ च मम गृहे विद्यन्ते।" इति। अथ 'यदि नाम एवंविधो महा-ऽर्घः समाचारः शासना-ऽधिकृतेभ्यः प्रदद्वस् तदा विपुलेन पारितोषिकेण पुरस्कृतौ भवाव।" इति लोभ हत-चेतसौ तौ उभौ 'मोरंडा'-नगरम् अधिवसन्तं रंघड-जातीयं शासना-ऽधिकारिणम् उपेतौ। तयोः सकाशात् तम् उदन्तं निशम्य भृशं मुदितः स कतिपयैः शस्त्रिभिः सहितो गंगु निवास-स्थानं 'सहेड़ी'-ग्रामं जगाम माता-गूजरीं ज़ोरावरसिंहं फतेहसिंहं च बन्दिनम् चकार।

अथ स 'मोरंडा'-शासनाधिकारी सरहिन्दं गत्वा तान् बन्दिनम् तनय-युगल-क्षत्रपाय वज़ीरख़ानाय अर्पितवान्। सोऽयं खलु वज़ीरख़ानो य आनन्दपुरम् अभ्यावेष्टत्। वज़ीरख़ानस्य आदेशेन दुर्ग-प्राचीरस्य उपरि वलभ्यां तेभ्यो वासोऽदीयत। आगामिनि दिने, १७०४ तमे ख्रीष्टाब्दे दिसम्बर-मासस्य २४ तमे दिवसे "गुरु-सुतौ आनेतव्यौ।" इति क्षत्रपा-ऽऽदेशात् पूर्वोक्तो 'रंघड़' तौ आनेतुं गतः। तस्य मुखात् क्षत्रपा-ऽऽदेशं श्रुत्वा पालकयोः पितामही, माता-गूजरी, भृश निंदला बभूव।

"ये शासनाधिकारिणो ऽनयोर् बालकयोः पितुः, तत्-सम्बन्धिनश् चेतना-ऽचेतनस्य सर्वस्य च, विनाशने बद्ध-परिकरा वर्त्तन्ते, ते इमौ कथं नु अनुकम्पिष्यन्ते ?" इति विचारः, क्षणमपि ताभ्यां वियोगम् असहमानायास्, तस्या हृदयं, मन्थ-दण्डो दधि इव, अमथ्नात्। सा स्वकयोः, सर्वस्वायमानयोस्, तयोः पौत्रयो रंघड़ाय अर्पणं कथमपि न अनुमेने। अथ ज़ोरावरसिंहोऽब्रवीत्:—"न अमी अस्माकम् अहिता आवां जीवन्तौ मोचयिष्यन्ति। तस्माद् आवाभ्याम् अवश्यं क्षत्रपस्य समक्षं गन्तव्यम्।" इति। तस्य तद् वचनम् आकर्ण्य माता-गूजरी, अनिच्छन्ती अपि, तयोर् गमनम् अनुजज्ञौ, एकैकं शिरसि उपाघ्राय, स्व-दुर्बलं हस्तं एकैकस्य शिरसि निधाय च बहुशः परमात्मानं तयोर् मङ्गलम् अयाचत। अथ बालकौ 'रंघड़म्' अनु निष्क्रान्तौ।

क्षत्रपस्य सभाम् उपेत्य तौ उच्चैस्तरां "वाहे गुरु जी का ख़ालसा; वाहे गुरु जी की फ़तेह।" इति सिक्खा-ऽभिवादन-वचनम् अब्रुवन्। निःशङ्कम् उच्चैर् उच्चारितं तयोर् इदं वचनम्, निःशङ्कम् अवस्थानं च सर्व-सभ्यान् व्यस्माययत्। अथ सभाया नीरवतां भञ्जयन् सुच्चानन्दो नाम क्षत्रप-सचिवोऽवोचत्:— "वत्सौ ! युवयोः पिता, ज्यायांसौ भ्रातरौ, तेषां सर्वे सहयायिनश् च 'चमकौर'-रणे हता। इदानीं यदि नाम युवयोर् जीवितं प्रियम्, तदा क्षत्रप-वरं नमतं माहम्मदीय-धर्मं च स्वी-कुरुतम्।" इति।

ज़ोरावरसिंहो मृदुना किन्तु निष्कम्पेन स्वरेण प्रत्यब्रवीत् —

"'परमेश्वरो वा गुरुर् वा केवलः प्रणन्तव्यो न कश्चिदन्यः।' इति धर्मोपदेशं गृहीतवन्तौ आवाम्। अथ च, श्रीगुरुहरगोविन्द-श्रीगुरुतेगबहादुर-श्रीगुरुगोविन्दसिंह-पूज्य-पादानां रक्तम् आवयोर् धमनीषु सञ्चरति। न पृथिव्यां कोऽपि शूरम्मन्य आवाभ्यां स्व-पूर्वज-धर्मस्य त्यागं कारयितुं क्षमः।" इति।

तस्य इदं धीरं प्रतिवचनं श्रुत्वा सर्वे पारिषदास् तत्-प्रभावं हृदयेन अङ्गी-कृतवन्तः। क्षत्रपश् च "अहो तथाविध-शूरौ शेमुषीशालिनौ च एतौ शिशू यदि माहम्मदीय-धर्मं स्वी-कुरुतस् तदा महान् धर्मोपकारो भवति।" इति मनोरथेन मनसि मुदितः सन् स्वयं तौ सम्बोध्य अगदीत् :—"बालौ! यदि युवां माहम्मदीय-धर्मं स्वी-कुरुथः, तदा अहं युवां क्षमिष्ये, एकस्या विशालया भू-सम्पत्त्याः स्वामिनौ करिष्ये, समस्त-मुगल-राज्ये संभावितयोर् उच्च-वंशयोर् दुहितरौ च युवाभ्यां परिणाययिष्ये।" इति। तच्छ्रुत्वा ज़ोरावरसिंहोऽनुजस्य आननम् अवलोकितवान्, तस्य नयनयोश च धीरतां स्व-धर्मं प्रति आस्थां च आलोक्य अधिकतरं मनो-बलम् आसादयन् इव दृढेन स्वरेण प्रत्यभाषत :— "न राज्यं न वा प्रतिष्ठां वाञ्छावः। मरणम् अङ्गी-करिष्यावः, न माहम्मदीय-धर्मम्। भवता दीयमानम्, इह लोके सुदुर्लभम् अपि, वस्तु न आवां विमोहयिष्यति न वा आवां स्व-धर्मतश् च्यावयिष्यति। न हि पार्थिवम् आधिपत्यम् नित्यम्। तुरुष्काणां गर्शंसं, पुनर्, तेषाम् एव विनाशाय भवेत्।" इति।

अथ वज़ीरख़ान आदिदेशः—"इमौ बन्दि-गृहं नेतव्यौ, श्वः प्रभाते च मत्-समक्षम् आनेतव्यौ।" इति। क्षत्रप-पुरुषास् तौ बन्दि-गृहम् अनयन्त, लोभेन भयेन च तौ क्षत्रप-निदेश-वर्तिताम् आनेतुम् अयतन्त। तौ, पुनः, आगामिनि दिने क्षत्रप-समक्षं गत्वा यथा-पूर्वं स्व-धर्मे अचलौ अस्थाताम्। तयोस् तादृशीम् अनाश्रवताम् अवलोक्य कुपितो वज़ीरखानस् तयोर् घोरं दण्डं पातयितुम् ऐच्छत्। तस्य विचारं विदित्वा 'मालेरकोटला'-पतिः शेरमुहम्मदः क्षत्रपस्य न्यवेदयत्:—"पितृ-कृतानाम् अपराधानां हेतोर् अल्प-वयसौ एतौ बालौ न माहम्मदीय-धर्म-शास्त्रतो दण्डम् अर्हतः। अत एव बन्दि-गृहाद् मोचयितव्यौ।" इति। तस्य परामर्शम् अरोचयन् कश्चिद् अपरः सभास्तारोऽकथयत्:— "मैवम्। शिशू अपि एतौ गुरुगोविन्दसिंहस्य सुतौ। तरुणौ भूत्वा गुरुगोविन्दसिंहेन प्रारब्धं राज-विद्रोहं पोषिष्यतः।" इति।

माहम्मदीय-न्याया-ऽधिकृतानां निर्णयम् अनुसृत्य वज़ीरख़ान आदिशत्:—"एतौ जीवन्तौ इष्टकाभिर् भित्ति-मध्य-गतौ कर्त्तव्यौ।" इति। अथ यदा तौ उरः-पर्यन्तं भित्ति-मध्य-गतौ अभूताम्, तदा पुनस् तयोर् लोभ-क्षमा-वचनम् अश्राव्यत। तौ, परम्, न 'बाढम्' अकुरुताम्। ततः क्षत्रपा-ऽऽदेशात् तस्य पुरुषाः भित्तिम् अपातयन्, मूर्च्छितौ तौ शिशू च बन्दि-गृहम् अनयन्। तत्र किञ्चित्-कालाद् अनन्तरं तौ सञ्ज्ञां प्राप्नुताम्।

दिसम्बर-मासस्य सप्तविंशे दिवसे पुनस् तृतीयं वारं तौ

क्षत्रप-समक्षं प्रापितौ, धर्म-परिवर्त्तन-विषये पृष्टौ च 'नो' इत्येव उक्तवन्तौ। एवं-गते क्षत्रपा-ऽऽदेशाद् 'गिल्ज़ई'-जातीयो वध्या-पुरुषः खड्गेन तौ वयः-क्रमेण एकैकशोऽवधीत्।

"श्रीगुरुगोविन्दसिंह-पूज्य-पादानां यवीयांसौ तनुजौ सरहिन्द-क्षत्रपेण वन्दी-कृतौ।" इति निशम्य टोडरमल-नामा कोऽपि सिक्ख-श्रेष्ठी "क्षत्रपाय दण्ड-धनं प्रदाय तौ मोचयामि।" इति विचारयन् सरहिन्दाय अधावत। असौ, पुनः, तयोर् वधाद् अनन्तरं तत्र प्राप्तः। अथ शोकोपहत-चेताः असौ माता-गूजरीम् उपेत्य हृदय-विदारणं तद् वृत्तं तस्या अश्रावयत्। एतान् त्रीन् दिवसान् सा वृद्धा सुदुर्वचां मानसीं पीडाम् अनुभवन्ती, दिवानिशं तयोः कुशलस्य नाथमाना च आस्त। बाल-पौत्रयोर् अनिष्टस्य शङ्कया क्षीण-प्राण-बला सा पौत्र-वध-समाचारं श्रुत्वा मूर्च्छां गता न च पुनः सञ्ज्ञाम् आगता ॥

---

[ ११ ]

# सम्राजो निर्भर्त्सना

'अन्यैः सिक्खैः सहितौ श्रीगुरुचरणानां ज्यायांसौ सुतौ चमकौर-रणे वीर-गतिं गतौ; त्रिभिः सिक्खैर् अनुगम्यमानाः श्रीगुरुचरणाश् च निशा-ऽन्धकारे चमकौरतो निष्क्रान्ताः।' इति कथितचरम्। चमकौरतो निष्क्रम्य त्रिभिर् अनुयायिभिर् वियुज्य च, आत्मना द्वितीयाः श्रीगुरुचरणाः कुत्राऽपि उपतिष्ठमानेन, विविक्तेन, परिश्रान्ति-जननेन, अध्वना, अविश्रान्तं गन्तुं प्रवृत्ताः। 'यवीयसोः सुतयोः किं भूतं? किं वा भावि?' इत्यत्र ते न किञ्चिदपि अविदुः। अपि च, चक्र-नेमि-क्रमेण न केवलं तेषां दशा विपर्यवर्त्तत; अतः परं तेषां प्रवास-यात्रा-ऽऽख्यायिका, रूपक-कथावद्, अचिन्तनीया नाना उद्घात-भूमीर् लङ्घमाना पुरस् सरति। अतः परं घोरासु सङ्कटा-ऽवस्थासु अप्रत्याशितं साहायकं तान् विपद उद्धरति, सहकारी जनश् च मुग़ल-सम्राड्-भयात् सहकारं त्यजति। अहो बत! यः पुरुषोत्तमः पुरा 'राज-सभया' उपास्यत, यश् च परम्-सहस्र-जन-हृदयानि शशास, सेनानी-पदं च अलञ्चकार, स एव दशा-विपर्ययेण एकाकी, निर्गृहः, निरन्नः, निरुपानत्कः, अध्वसु अभ्रमीत्; स पादप-पर्णानि प्राश्य अशनायाम् अर्क-दुग्धेन ओष्ठौ क्लेदयित्वा च उदन्याम् अशमयत्; कठोर-कान्तारेषु सतत-चङ्क्रमणात् क्षताभ्यां तस्य

पादाभ्याम् असृग् अस्रवत् । एवं-गतेऽपि श्रीगुरुचरणाः परमेश्वरस्य महिमानं दयां च यथा-पूर्वम् अस्मरन्, अस्तुवंश् च; अद्याऽपि स्व-जीवनोद्देश्यं प्रति तेषाम् आस्था अशिथिला, व्यवसायश् च अचलोऽवर्त्तिष्ट। एतादृश्याम् एव अवस्थायाम् एकदा निशायां निरतिशय-क्षुधा-श्रान्तिभ्यां नैशेन शारद-शैत्येन च विचेतनी-कृत-गात्रास् ते 'माछीवाड़ा'-विपिना-ऽरण्य-प्रान्तरे, व्योम-तले, निष्पटलं निरुपस्तरणं निर्वृतिकं स्थण्डलम् अधिशेरते स्म। तदा स्वतो विनिःसृतया छन्दोमय्या वाचा ते परमेश्वरस्य महिमानम् इत्थम् अगायन्ः—

यदि त्वं सविधे नास्ति प्रिय-मित्र! प्रिय-प्रभो!
शिरीष-कोमला शय्या कीलकफलकायते॥

हर्म्ये वासश् च वासस् तु कृष्णसर्पा-ऽऽकुले गृहे।
चषकः शल्य-तुल्योऽस्ति तन्-प्रान्तश् च क्षुरो यथा॥

वधिक-क्षुरिका-ऽग्रेण वेधः पीडाकरो यथा।
सर्वं जगत् प्रभो! तद्वत् त्वद्-वियोगे ह्यरुन्तुदम्॥

दुःखेष्वपि प्रभोः पार्श्वे वासो मम यथा प्रियः।
भोगैर् बहु-विधैः पूर्णे न राज-भवने तथा॥

अथ ये त्रयः सिक्खाः श्रीगुरुचरणैः सह निशा-ऽन्धकारे चमकौरतो निष्क्रम्य सुर-वर्त्मनि द्योतमानाम् ताराः करदीपी-कृत्य, श्रीगुरुचरणान् अनुवर्त्तमाना अपि वर्त्मनो दुर्निरीक्ष्यत्वात् श्रीगुरुचरण-सङ्गात् परिच्युताम् ते अनवरतं श्रीगुरुचरणान् अन्विष्यन्तस् तत्र प्राप्ता यत्र निष्प्रयोजनतया प्रक्षिप्तं मृण्मयं

शरावम् उपबर्ही-कृत्य श्रीगुरुचरणा यथोक्त-रीत्या अशेरत। "श्रीगुरुचरणान् मार्गयमाणम् एकं मुगल-शासक-सैनिक-वरूथं ततोऽन्तिकाद् वने भ्रमति।" इति विदन्तोऽपि ते स्व-प्रभोः पुनः साक्षात्कारेण प्रहृष्य अभिवादन-वचनं तथा उच्चैस्तराम् अवोचन् यथा तस्य प्रतिध्वनिः शरण-स्थल-सीमाम् अपि उदचरत। अथ 'एष वनोद्देशो निरापदो नास्ति।' इति मनसा निश्चित्य ते "सत्य-प्रभो! सत्वरम् अस्मात् पदाद् अन्यत्र गन्तव्यम्।" इति प्रार्थयन्त। तत्-पूर्वेद्युर् भ्रमन्तस् ते यत् स कूपम् एकम् उद्यानम् अद्राक्षुः, परिश्रान्ति-विकल-सर्वा-ऽङ्गान् श्रीगुरुचरणान् तत्रैव अनैषुः। तत्र प्राप्य ते चिराद् अनन्तरं स्नातवन्तः। सकृत्-कृता-ऽऽनन्दपुर-तीर्थ-यात्रः, गुरु-भक्त-सिक्खः, गुलाब नामा तदुद्यान-स्वामी श्रीगुरुचरणान् तत्र प्राप्तान् अवलोक्य आत्मनो जन्म धन्यम् अमन्यत। असौ तत्-क्षणं गृहं गत्वा दुग्ध-पूर्णं बृहद् भाण्डम् एकं तेभ्य आनयत्। पयः पीत्वा सर्वे मार्ग-खेदा-ऽपनयनाय तत्रैव प्रसुप्ताः। तेषां स्वाप-काले गुलाबस् तस्य भ्राता च प्रतीहार-पदम् निष्प्रमादम् अपालयताम्। तदनन्तरं गुलाब उपांशु बहुमान-पुरस्सरं च तान् स्व-गृहम् अनयत्, अचिर-पूर्व-निर्मितायां वलभ्यां च तेषां वासम् अकारयत्।

'श्रीगुरुचरणानां तत्र सन्निधानं न कस्याऽपि विदितं भवेत्।' इत्यत्र सर्वात्मना अप्रमादे कृतेऽपि रहस्यं शनैः शनैर् उद्भिन्नम् एव। एतद् विज्ञाय शासक-भयाद् आतुरो गुलाबोऽचिन्तयत्ः—"कस् तावद् अपदेशः स्याद्? येन

श्रीगुरुचरणानां निवेदयामि 'इतोऽन्यत्र गमनम् एव श्रेयः ।' इति"। इति । अश्व-क्रय-विक्रयिणौ ग़नीख़ान-नबीख़ान-नामानौ तत्रत्यौ द्वौ माहम्मदीयौ पुरा असकृद् आनन्दपुरं गत्वा बहून् उत्तमा-ऽश्वान् श्रीगुरुचरणेभ्यो व्यक्रीणाताम्, श्रीगुरुचरणा-ऽऽश्रये च न्यवसताम्। गुलाबस्य चिन्ता-काले तौ अशृणुताम्:—"श्रीगुरुचरणान् अन्विष्यन्तो मुग़ल-भटा इतस् ततो भ्रमन्ति।" इति। तच्छ्रुत्वा तौ श्रीगुरुचरणानां निर्विघ्न-निष्क्रमणस्य उपाय-चिन्तने गुलाब-सहायौ अभूताम्। तथाहि, गुलाब-प्रतिवेशिनी श्रीगुरुचरणा-ऽनुरागिणी काचित् सिक्ख-महिला भूरि-श्रद्धया अनेक-मास-परिश्रमेण कार्पासिकं पटं निष्पाद्य "यदि नाम जातुचित् श्रीगुरवः स्व-चरणाभ्याम् अस्मद्-ग्रामं पुनन्ति तदा तेषाम् उत्तरीय-निमित्तं पटम् एतम् तेभ्यः समर्पयामि।" इति मनोरथं कुर्वाणा आस्त। साम्प्रतं सा तथा कृत्वा कृत-कृत्या अभवत्। ग़नीख़ान-नबीख़ानयोर् मन्त्राद् गुलाबस् तं पटं नील्या अरञ्जयत्, तस्य च माहम्मदीय-वैखानस-परिधाना-ऽर्हान् चतुरश् चोलकान् असेवयत्। अथ नील-चोलक-परिधायिनः श्रीगुरुचरणा गुलाबस्य गृहतो निष्क्रम्य शिबिकाम् आरूढाः। ग़नीख़ान-नबीख़ानौ अग्रतः मानसिंह-धरमसिंहौ च पृष्ठतस् ताम् शिबिकाम् अवहन्, दयासिंहश् च चामरम् अवीजयत्। "को नु शिबिका-ऽऽरूढः प्रयाति?" इति पृष्टम् तैः "उच का फ़क़ीर।" इति प्रत्यभाष्यत। "उच का फ़क़ीर" इति श्लिष्ट-वाक्येन तेषाम् अर्थ-द्वयं विवक्षितम्——" 'पञ्चाप'-दक्षिण-भाग-स्थिते माहम्मदीय-जन-तीर्थ-भूते उच-नाम्नि ग्रामे यो वसति स माहम्मदीय-वैखानसः"

इति, "यो वैखानसानां मध्ये उच्चं पदम् अधितिष्ठति स वैखानसोत्तमः" इति च ।

'लाल'-नाम-ग्रामम् आरात् श्रीगुरुचरणा-ऽन्वेषण-पर एको मुग़ल-सैनिक-गणो याप्ययान-समीपम् आगतः, तदध्यक्षश् च स्व-सन्देह-निवृत्तये याप्ययान-वाहकान् बहुधा अप्राक्षीत् । अथाऽपि सन्देहे अनिवृत्ते असौ 'लाल'-ग्राम-वास्तव्यं क़ाज़ी-पीरमुहम्मदम् आह्वाययत् । सोऽयं पीरमुहम्मदः, य आनन्दपुरे बाल-गोविन्दसिंहस्य आर्बुदी-पारसीकी-भाषयोर् उपाध्यायो बभूव । सदाशयः श्रीगुरुचरण-हितैषी स मुग़ल-सैनिकान् भर्त्सयमाणोऽब्रवीत्:— "एतादृशेषु महा-महिम-महात्मसु युष्माभिर् विनयेन वर्त्तितव्यम्, न अविनयेन ।" इति । तद् निशम्य निवृत्त-संशयो मुग़ल-वरूथ-नायकस् तु पीरमुहम्मदं क्षमाम् अयाचत, याप्यमान-मार्गाच्च अपसृतः ।

एवम् अग्रे सरन्तः श्रीगुरुचरणा 'हेहड़'-नाम-ग्रामं प्राप्ताः । तत्र 'भंगानी'-युद्धे श्रीगुरुचरण-सहयुध्वा कृपालुदासो नाम मठा-ऽधीशो न्यवसत् । स श्रीगुरुचरणेभ्यस् तेषां सहयायिभ्यश् च स्वागतं व्याजहार, तत्-पदा-ऽनुरूपं यथा-स्व-विभवं च तेषाम् आतिथेयो बभूव । स्वार्थ-संस्पर्श-विहीनाभ्यां ग़नीख़ान-नबीख़ानाभ्यां स्व-प्राण-भयम् उपेक्ष्य महान्तम् आयासम् उररी-कृत्य च श्रीगुरुचरणानां या दुष्करा सेवा कृता तत्-पुरस्कारतया श्रीगुरुचरणास् ताभ्यां सुवर्ण-कङ्कणान् एकम् 'निदेश'-पत्रं च

ग्रादुः । 'निदेश'-पत्रे लिखितम्ः—"इमौ सिक्खानां सकाशात् सम्भावनां यथाऽवसरं च साहाय्यम् अर्हतः।" इति । तद् 'निदेश'-पत्रं यावदिदानीं तयोः कुले जातानां सकाशे सुरक्षितं वर्त्तते, सिक्खाश् च औत्सुक्येन तद् विलोकयन्ति, तस्य स्वामिनां सम्मुखं च तत्-पूर्वज-कृतोपकार-भारं आदरेण अङ्गी-कुर्वन्ति। अस्तु, तथा पुरस्कृतौ ग़नीख़ान-नबीख़ानौ श्रीगुरुचरणान् आपृच्छ्य, विषण्णेन हृदयेन, यथाकथञ्चित्, स्व-गृहं प्रति प्रस्थितौ।

कृपालुदासो मठाऽधीश-सुलभान् भोगान् यथा यथा भूयो-भूयो अभुङ्क्त, तस्य हृद्-देशे प्रवहन्ती गुरु-प्रीति-मन्दाकिनी-धारा तथा तथा भूयो-भूयोऽक्षीयत। "'मठाऽधीशोऽयं सम्राड्-द्रुहो गुरोः शरणी-भूतः।' इति ज्ञात्वा मुग़ल-शासनाधिकारिणो मां सङ्क्रुध्येयुः।" इत्येवं मनसि कृत्वा कृपालुदासः शासक-भिया आकुलोऽभवत्। तस्य मनस्-त्रासम् अनुमाय श्रीगुरुचरणास् ततः प्रस्थाय जैतपुरं नाम ग्रामं प्राप्ताः। तत्र राय-कल्हो नाम माहम्मदीयो 'रायकोट'-नगर-प्रधानः, 'अहो मम सौभाग्यं यद् अहं श्रीगुरुचरण-सेवाऽवसरं लब्धवान्।' इति मन्यमानः, अकृतक-शिष्टाचार-प्रेम-पुरस्सरं तान् अभ्यनन्दत्। अथ "'श्रीगुरुचरणानां जननी सुतौ च सरहिन्द-क्षत्रपाऽऽदेशाद् बन्दी-कृताः।' इति प्रवादो मिथ्या वा सत्यो वा।" इति निश्चेतुं तेन माही-नामा स्व-भृत्यः सरहिन्दाय प्रेषितः। सरहिन्दे यज्जातं तत् सर्वं यथावद् विदित्वा माही प्रतिनिवृत्तः, स्व-स्वामिनः पुरो हिडिका-पर-वशो

भूत्वा च सरहिन्दीयं वृत्तम् आख्यातुम् अक्षमोऽभवत्। अथ कथञ्चिद् हृदयं दृढी-कृत्य असौ तां करुण-कथाम् अकथयत्। ताम् आकर्णयत एव राय-कल्हस्य धैर्यं विगलितम्; स च क्रन्दितुम्, तादृशा-ऽत्याचारकारिण आक्रोष्टुं च, आरमत। ग्राव्णोऽपि हृदयस्य विदारणं तद् वृत्तम् आकर्ण्य श्रीगुरुचरणाः, पुनः, न अरुदन् न अश्रूणि अमुञ्चन् न वा व्यलपन्। ते, पुनः, 'त्वदीयं वस्तु सर्वेश! तुभ्यमेव समर्पितम्।' इत्यभिधाय परमात्मनोऽनुग्रहं सादरम् अस्मरन्, 'प्रभोर् इच्छां प्रमाणं मत्वा मनुष्येण न कदाऽपि धैर्यं त्याज्यम्।' इत्येवं-प्रकारैर् वचनैश् च राय-कल्हं प्राबोधयन्। अथ ते मालेरकोटला-पतेः शेरमुहम्मदस्य सौजन्यं प्राशंसन्, तस्मै तद्-वंशधरेभ्यश् च शुभा-ऽऽशिषोऽव्यतरन्। ततः प्रस्थाना-ऽवसरे श्रीगुरुचरणा राय-कल्हाय आशीर्वाद-व्यञ्जकं कृपाणम् एकं प्रादुः। राय-कल्हस् तस्य सुतश् च तं कृपाणं भृशा-ऽऽदरेण अरक्षताम्। राय-कल्हस्य पौत्रस् तम् आदाय एकदा आखेटकाय गतः, मृग-हननोद्योगे च तेन क्षत-शरीरो नीरोगतां नाऽऽगतः। आङ्ग्ल-शासन-काले कोऽपि रायकल्ह-वंश्यः पुरुषस् तं कृपाणं लुध्याना-'ज़िला'-ऽधीशाय आङ्ग्लाय उपायनी-कृतवान्; स च तं आङ्ग्ल-देशाय प्रहितवान्। एवं करात् करं प्राप्य स कृपाणः सम्प्रति आङ्ग्ल-देशे अद्भुत-वस्तु-सङ्ग्रहा-ऽऽलये सुरक्षितः।

अथ रायकल्हस्य सकाशात् श्रीगुरुचरणा दीना-नाम-ग्रामं

प्राप्ताः । अयं ग्राम आङ्ग्ल-शासन-समये 'नाभा'-नाम-राज्या-ऽन्तर्गतोऽभूत् । अत्र ते चिरं स्थिताः, पुनः सिक्ख-सैन्य-सङ्घटने च प्रवृत्ताः । एतद्-ग्राम-वास्तव्यो जोधरायो नाम श्रीगुरुहरगोविन्द-भगवत्-पाद-भक्तो गुरु-पक्षम् अवलम्ब्य मुगल-शासकैः सह अयुध्यत । शमीरा-लखमीरा-तख्तमल-नामानः, त्रयस्, तत-पौत्राः श्रीगुरुचरणैः पुनः पुनर् निषिद्धा अपि आत्मानं तच्चरणा-ऽर्पितं कृत्वा नवीन-सिक्ख-सैन्यस्य मूल-प्रतिष्ठां विदधुः ।

"श्रीगुरुचरणा दीना-ग्रामम् अधिवसन्ति ।" इत्येषा प्रवृत्तिर् यथा यथा कर्णाकर्णिकया सिक्खान् प्राप्नोत् तथा तथा ते एकैकशो गणशश् च तत्र आगन्तुं प्रारब्धाः । तत्र समागतानां सिक्खानां मध्यतः कतिपये 'यद् भावि तद् भवतु ।' इति दृढं सङ्कल्प्य श्रीगुरुचरण-सेवार्थे तत्रैव अतिष्ठन् । भाईरूपा-नामा कोऽपि परम-गुरुभक्तः श्रीगुरुहरगोविन्द-भगवत्-पादानां 'त्वद्-वंशे सिक्ख-धर्मस्य अनन्ता प्रतिष्ठा भविष्यति ।' इत्येवंरूपाया आशिषो भाजनम् अजायत । तस्य कुले जातौ परमसिंह-धरमसिंह-नामानौ द्वौ गुरु-भक्तौ अश्वम् वस्त्र-युगलं च श्रीगुरुचरणेभ्यः सादरम् उपाहरताम् । श्रीगुरुचरणास् तयोर् गुरु-भक्त्या अतीव प्रहृष्टाः, तयोर् उपहारं च अङ्गी-कृत्य तं स्व-प्रसाद-रूपेण पूर्वोक्ताय शमीरा-नाम-भक्ताय सम्प्रादुः । परमसिंह-धरमसिंहयोः कुलं परम्परया अद्याऽवधि सिक्ख-धर्म-विद्या-निधानम् आचार-पूतं मित्र-समाजे-समादरा-ऽऽस्पदं च वरीवर्त्ति । तत्-कुल-भवा एव

सिक्ख-प्रवराः 'बागड़ियाँ के भाई' (बागड़ियाँ-वास्तव्या भ्रातरः) इति ख्यायन्ते। 'पटियाला'-'फ़रीदकोट'-'नाभा'-'जींद'-'कपूरथला'-'कलसिया'-राज्यपतयः षड् राज-वंशाः ज्येष्ठं 'बागड़ियाँ-भ्रातरम्' विशेषेण मानयन्ति, धार्मिकेषु लौकिकेषु च संस्कार-पर्वोत्सवेषु तमेव पुरोधसं वृणते।

चमकौर-युद्धाद् अनन्तरं श्रीगुरुचरणैर् अवरङ्गज़ेबाय यत् पत्रं प्राहीयत, तस्य प्रतिवचनं दीना-ग्रामे कृत-वासान् तान् उपनतम्। तस्मिन् प्रतिवचन-पत्रे अवरङ्गज़ेबस्य स्वरः सन्धि-काम इव श्रूयते। तत्र हि अवरङ्गज़ेबः श्रीगुरुचरणान् "दक्षिणापथम् आगत्य भवता द्रष्टव्योऽहम्।" इति आमन्त्रयत। श्रीगुरुचरणैश् चमकौर-युद्धाद् अनन्तरम् अवरङ्गज़ेबाय प्रहितस्य पूर्वोक्त-पत्रस्य खण्ड-विशेषो नचिरात् पूर्वं प्रकाशम् आगतः। दीना-ग्रामतो ऽवरङ्गज़ेबाय प्रहितस्य श्रीगुरुचरण-प्रतिवचन-पत्रस्य अविकलं प्रतिरूपं 'दशम-ग्रन्थे' सुरक्षितम्। इदं द्वितीयं पत्रम् अपि, पूर्व-पत्रम् इव, ओजः-प्रसाद-गुणाभ्यां व्याप्तं पारसीकी-भाषा-पद्य-निबद्धं च समस्ति, श्रीगुरुचरणैश् च 'ज़फ़र्-नामा' (विजय-पत्रम्) इति व्यपदिश्यते। श्रीगुरुचरणा-ऽऽदेशाद् दयासिंह-धरमसिंहौ तत् पत्रम् अवरङ्गज़ेबं प्रापयितुं दक्षिणापथं गतौ।

अस्मिन् पत्रे एकादशोत्तर-शतेन (१११) पद्यैः श्रीगुरुचरणा धर्मा-ऽनुराग-सञ्जनितया धीरोदात्त-मनोवृत्त्या मनो-गतं वाचि

निवेशयन्ति । पत्रम् एतत् श्रीगुरुचरणानां साहसम्, विस्रम्भम्, धार्मिक-प्रयोजनं च सम्यग् अभिव्यनक्ति । "समाज-सम्बन्धिषु एक-व्यक्ति-सम्बन्धिषु वा कार्येषु मनुष्येण न कदाचिदपि निश्छलः सत्यो धर्मो विस्मरणीयः ।" इति तत्र तात्पर्यतया विवक्षितम् । तत्र अन्यायो जुगुप्सितः, न्यायश् च प्रशंसितः, उक्तं च 'विभूत्याः वा सम्पत्त्याः वा उपार्जना न जयस्य लक्षणम् । द्वे अपि एते क्षणिके खलु । परैः पराभूतोऽपि यो धर्मं न जहाति स जयी । तस्माद् धर्मः खलु जयस्य लक्षणम् ।' इति । अपि च, तत्र विन्यस्तम् :—

"मुगल-शासना-ऽधिकारिणो धर्म-ग्रन्थं साक्षी-कृत्य कृतैः शपथैर् आनन्दपुराद् मम निरुपद्रव-निष्क्रमण-विषये विस्रम्भम् उत्पादितवन्तः, यदा च सिक्खा निष्क्रमितुं प्रारब्धाम् तदा ते शपथान् विस्मृत्य, निरुपायानां सिक्खानां प्राणिहिंसने पुनः पुनः प्रवृत्ताः । तादृश-सन्धा-भङ्गः कथं नाम धर्माऽनुमोदित उच्येत !" इति ।

तत्र पत्रे पूर्वोक्त-प्रकारेण बहुधा अवरङ्गजेबस्य भर्त्सना क्रियते । सम्राट् स्वयं, तस्य राज-नीतिश् च, स्पष्टं विगर्ह्यते । तस्मात् तत् पत्रं सर्व-राष्ट्राणाम् इतिहासेषु राजनीतिविषयक-निरतिशयविशदार्थ-निबन्धतया गणयितुम् उचितम् । तत्र हि एक-व्यक्ति-गत-व्यवहारेषु इव राज्य-कर्मसु अपि धर्मस्य प्राधान्यं समर्थ्यते, उपायानाम् उपेयौचित्या-ऽनुसारिता प्रतिपाद्यते,

'साधारण-प्रजा-जनवद् राजभिर् अपि सत्यवादिभिर् भवितव्यम्' इति च सिद्धान्त्यते।

'नित्यः, दयालुः, अनुकम्पाशीलः, पाप-क्षमाकृत्, महाराजा-ऽधिराजः, दीन-जना-ऽऽश्रयः, धर्मस्य त्राता, वाग्मितायाः धेनुः, दिव्य-ज्ञानस्य भानुः' इत्यादिभिर् गुण-वचनैर् ईश्वरं स्तुत्वा श्रीगुरुचरणाः पत्रं तत् प्रारभन्ते। अथ सम्राजं सम्बोध्य तैर् उपन्यस्यते :—

एकं परं ब्रह्म तु साक्षि कृत्वा,
भो धर्मवादिन्! शपथं करोषि।
अथाऽपि, सत्यं, हृदये न मे त्वम्,
विस्रम्भमल्पं ह्यपि सन्तनोषि॥

त्वया कृतं यः शपथं कदाचिद्,
विश्वस्य भूता-ऽर्थतया ह्यवेति।
निअनिर्भयं वच्मि वचो वचोवित्!
स एव लोके बहु-शोकमेति॥

न बुध्यसे त्वं जगतां पतिं भो,
दूतं न वा विश्व-पतेः कथञ्चित्।
प्रपद्यसे त्वं पदवीं तृतीयां,
माया विचित्रा हि विशांपते! ते॥

धर्मं स्वकीयं परमात्म-भीरुर्,
आतिष्ठते कश्चन निश्छलं यः।
असून् विमुञ्चेदपि नाम मुञ्चेत्,
स्व-संविदं किन्तु न मुञ्चते सः॥

मुहम्मदाख्यान् प्रभु-दूत-पादान्,
महीतले चेन् निरवर्णयिष्यम् ।
नूनं तदाऽहं तव वञ्चकत्वम्,
तेषां पुरस्तादुदमेदयिष्यम् ॥

यद् वाचि तन्नास्ति मनःसु येषाम्,
कर्माऽपि येषां न वचोऽनुसारि ।
युक्तं न गन्तुं खलु तत्-पथेन,
सदैव पाल्यं वचनं नरेण ॥ इति ।

अथ श्रीगुरुचरणैर् अभिहितम् :—"मदीयेषु चतुर्षु सुतेषु वीरगतिं प्राप्तेषु अपि नाऽहं धर्म्याद् युद्धाद् विरमामि यावद् ।" इति ।

ततः श्रीगुरुचरणा व्याजस्तुति-रीत्या अवरङ्गज़ेबस्य अधार्मिकत्वम् अपवदन्तो वदन्ति :—"महाराजा-ऽधिराज ! योधा-ऽग्रणीः ! सादि-प्रवर ! अवरङ्गज़ेब ! धन्यस् त्वमसि ! ललिता तव अङ्ग-यष्टिः, कुशाग्रा ते मतिः ! शास्ता सम्राद् च अस्य भू-खण्डस्य त्वमसि । यथा प्रशासने तथा खड्ग-वाहने सिद्ध-हस्तोऽसि ! स्व-धर्मिणाम् अनुग्रहणे अन्य-धर्मिणां च निग्रहणे न विलम्बं वितनुषे !

राज्यानि वा धनानि वा तृणाय मत्वा वितरसि ! तव वदान्यता अपरिच्छेद्या ! रणे च अचलवद् अचलम् तिष्ठसि । वृषस्थ-सूर्यवद् उन्नतं पदम् अलङ्कुरुषे । राजानम् ते प्रजाः मन्ति । समस्तायाः वसुमत्याः राजसिंहासनानां च अवतंसोऽसि । शासिता मही-मण्डलस्य असि । धर्मात् पुनस्तु दूरेणाऽसि ।" इति ।

अस्य सर्वस्य तात्पर्यं तु केवलम्ः—"अत्र उपवर्णिताः सर्वे गुणा अपार्थकाः, यदि एभिर् गुणैर् उपेतोऽपि नरो न दयावान्, न वा अन्यान् प्रति व्यवहारेषु सत्यवान् ।" इति ।

अवरङ्गज़ेबः श्रीगुरुचरणान् दक्षिणापथम् आगन्तुम् आमन्त्रयत । "दक्षिणा-पथस्य तस्मिन् भागे यत्र-ऽऽध्मातो 'ब्रार' (विदर्भ?)-नामा जनस् तव निदेशवर्त्ती वर्त्तते । तस्मात् तत्र नीवृति मदीया यात्रा न निरापदा ।" इति उक्त्वा ते, तु, तस्मै प्रहिते स्व-प्रतिवचने तं दीना-ग्रामस्य अन्तिकेन 'कंगड'-ग्रामम् आगन्तुम् आमन्त्रयन्त ॥

---

# सेवा-परित्यागिनां मुक्तिः

श्रीगुरुचरणेषु शमीरासिंहस्य अतिथित्वेन दीना-ग्रामम् अधिवसत्सु "गुरुगोविन्दसिंहः क्षीणं सिक्ख-बलं पुनः सङ्गृह्णन् आस्ते।" इति श्रुत्वा सरहिन्द-मुग़ल-क्षत्रपो वज़ीरख़ानः शमीरासिंहाय आदेशं प्रेषितवान् :—"गुरुगोविन्दसिंहं मह्यम् अर्पय।" इति। शमीरातो नकारात्मके प्रतिवचने प्राप्ते वज़ीरख़ानो बलात् श्रीगुरुचरण-निग्रहणे मतिं चकार। "'यत्रत्यो लोकः प्रगाढ-श्रद्धा-भक्तिभ्यां माम् अभ्यनन्दत्, आतिथ्येन च असेवत, स ग्रामो मत्-कारणाद् विपद्येत।' इति अयुक्तम्।" इति विचार्य श्रीगुरुचरणास् ततः प्रस्थिताः। जलाल-नाम-ग्राम-मार्गेण च भगता-नामानं ग्रामं प्राप्ताः। अत्रैव ग्रामे पञ्चम-नानक-श्रीपूज्या-ऽर्जुन-देव-पादानां जीवित-काले महतीं प्रतिष्ठां प्राप्तो भाई-बहिलो नाम सिक्खः पुरा प्रत्युवास। तस्य अन्वयजान् गुरुमुख-सिक्खान् तदातिथ्य-स्वीकारेण अनुगृह्य श्रीगुरुचरणाः कोटकपूरा-नाम-नगराय प्रयाताः। तत्र फ़रीदकोट-राजवंश-पूर्व-पुरुषः, कपूरसिंहः, तान् अभ्यनन्दत्, यथा-विधि दीक्षां गृहीत्वा च ख़ालसा-संस्थां प्रविवेश, श्रीगुरुचरणै प्रमादी-कृत्य प्रत्तं कृपाणं चर्म च सादरं प्रतिजग्राह। एतद् द्वयम् अद्यावधि तस्य अन्ववाये स-श्रद्धम् अवेक्ष्यमाणं सुरक्षितं च वर्तते।

"वज़ीरख़ानस्य सैन्य-चलं पार्ष्णि-ग्राहतया अनुयाति।" इति समाचारं समासाद्य श्रीगुरुचरणाम् तस्य दक्षिण-पूर्वेण स्थितं ढिल्वाँ-नामानं ग्रामं गताः। तत्र पृथ्वीचन्द्रो नाम, पञ्चम-गुरु-श्रीपूज्याऽर्जुनदेव-पादानां यो ज्येष्ठो भ्राता, पूर्व-सम्प्रदायात् पृथक् स्व-सम्प्रदायं प्रवर्त्तयिष्यन् श्रीगुरुनानक-भगवत्-पाद-प्रवर्त्तित-गुरु-परम्परा-प्रतिष्ठितं सिक्ख-सम्प्रदायम् उपेक्षाञ्चक्रे, बाबा-कौल-नामधेयस् तत्-कुलधरः श्रीगुरुचरणान् उपेत्य तेभ्यो वस्त्राणि उपाहरत्। तस्य पौत्रस् तेषां हस्ताभ्यां सिक्ख-धर्म-दीक्षां जग्राह। इत्थं च पृथ्वीचन्द्र-कुलं श्रीगुरुनानक-भगवत्-पादानां गुरु-कुलेन पुनः समगंस्त। 'माछीवाड़ा'-वन-समीपे भक्त-गुलाबस्य ग्रामात् प्रस्थाय अद्यावधि परिधीयमानं नील-चोलकम् अवतार्य इदानीं श्रीगुरुचरणा बाबा-कौलेन उपहृतानि वस्त्राणि परिदधुः। बाबा-कौलः श्रीगुरुचरणैः परिहित-पूर्वस्य नील-चोलकस्य एकं खण्डं समादरेण स्व-सद्मनि समरक्षत्। तस्माद् एव सिक्खेषु अकालिनां निहंगानां च नील-वेषः प्रथाम् आगात्।

अ-चिरं ढिल्वाँ-नाम-ग्रामे उषित्वा श्रीगुरुचरणाः 'कोठा-प्रिथिचन्द'-नाम-ग्रामाय प्रस्थिताः। स एव ग्रामः श्रीगुरुचरण-निवास-हेतोर् उत्तर-काले 'कोठा-गुरु' (गुरोः कोष्ठम्) इति सञ्ज्ञाम् अलभत। तत्र प्राप्य श्रीगुरुचरणा ग्रामस्य अन्तिकेन वने निवस्तुम् आरभन्त। पञ्चापस्य आग्नेय-दिशीये प्रदेशे पर्यटन्तः श्रीगुरुचरणा दूरा-ऽदूरवार्त्तिभ्यः स्व-भक्तेभ्यः स्व-समाचारान् प्राहिण्वन्, तैः

सह पुनः सम्बन्ध-ग्रन्थिं च अवध्नन्। मुग़ल-सैन्यैर् आनन्दपुरस्य उपरोधे कृते पुरा ये सिक्खा गुरौ विरज्य निर्गताः, ते च अन्ये च बहवः सिक्खाः साम्प्रतं जीवित-त्यागेन अपि श्रीगुरुचरणाऽऽराधनाय तत्र वने सङ्गन्तुं प्रारब्धाः। नियमेन सम्पद्यमाना आह्निकी धर्म-समज्या च खण्डशो जाते सिक्ख-समाजे शनैः शनैः पुनः पुरातनीं संहतिं, स्फूर्तिं, प्राण-शक्तिं, कर्तव्य-कार्य-विषयिणीम् अनुरक्तिं च उत्पादयामास। वज़ीरख़ानेन सह सङ्ग्रामम् अनतिकाला-तिपातेन अवश्यम् भाविनं विभाव्य श्रीगुरुचरणा यावत् तत्र मरु-खण्डे सुलभ-जलं रणोपयुक्तं प्रदेशं मनसा अन्विष्यन्ति तावत् कोऽपि तेषां भवतः "खिदराणा-नामधेय उद्देशस् तथा-विधः।" इति निवेदयति। अथ सिक्खैः परिवृतास् ते 'खिदराणा'-दिशि प्रस्थिताः। पथि, जैतु-नाम-नगरे, कपूरसिंहो नाम 'ब्रार'-कुल-प्रवरः, पुनस् तान् उपतस्थौ, 'ख़ाना'-जातीयकं 'खिदराणा'-मार्ग-दर्शकं च तेषाम् आयत्ती-चकार।

ये सिक्खा आनन्दपुरे श्रीगुरुचरणेषु विरज्य स्व-गृहेभ्यः प्रस्थितास् ते क्षिप्रम् अनुतापम् आगताः। स्व-ग्राम प्राप्तान् तान् ग्रामवासिनोऽनिन्दन्; तेषां हरिण-हृदयत्वं जुगुप्समानस् तेषां नारी-जनो जगाद :—"अस्माकं वासांसि परिधाय यूयम् अन्तर्-गृहे सन्तिष्ठध्वम्, स्व-पुरुष-परिधानं च नो दद्ध्वम्। वयं श्रीगुरुचरण-सेवार्थं सङ्गरम् अवतरितास्मः।" इति। अपि च, श्रीगुरुचरणानां तेषां कुटुम्बस्य च घोर-व्यसन-वृत्तान्ताः सिक्खानां

चिन्ता-ऽमर्षौ उददीपयन् । "श्रीगुरुचरण-त्यागिनः सिक्खाः कथं दण्डनीयाः ? श्रीगुरुचरणानां साहाय्या-ऽऽचरणस्य च कोऽभ्युपायः ?" इति विचारयितुकामाः, 'मध्य-पञ्चाप'-वास्तव्याः सिक्खाः, अमृतसरतः कतिपय-क्रोश-दूरे पट्टी-नाम-नगरे सभां चक्रुः । तत्र केचित् सभ्याः "गुरु-साहाय्यम् असंशयं सम्राड्-रोषकरं भवेत् ।" इति मन्त्रयित्वा तस्य परिहरणम् एव कल्याण-करम् अमन्वत । अन्ततोगत्वा "केचित् प्रतिनिधयः श्रीगुरुचरणान् उपेयुः ।" इति निश्चीयते स्म । अथ परिषदा वृताः प्रतिनिधयः—केचित् प्राण-त्यागेनाऽपि श्रीगुरुचरण-शुश्रूषवः, अन्ये च सम्राड्-विरोध-परिहरणे हितं परिभावयन्तः, 'मालवा' इति ख्याताय दक्षिण-पश्चिम-पञ्चाप-प्रदेशाय प्रस्थिताः । मार्गे बहवः सिक्खाः तैः समगंसत । एवं क्रमेण बहुली-भवन् स सिक्ख-समुदायः 'खिदराणा'-ऽभ्यर्णे ऽरण्ये श्रीगुरुचरणान् अभ्युपेतः ।

श्रीगुरुचरण-समक्षं प्राप्य सिक्खैर् ईषद्-गद्गदेन कण्ठेन उच्चारितम् 'वाहे गुरु जी का ख़ालसा ; वाहे गुरु जी की फ़तेह ।' इति अभिवादन-वचनं कस्य हृदयं न हर्ष-शोकाभ्यां तरली-चकार । तादृश-दुर्वच-व्यसना-ऽभिभवेऽपि अम्लानं सहजं तेजो दधानान् श्रीगुरुचरणान् विलोक्य एकेषां मनांसि अद्रूयन्त, अपरेषाम् अप्रीयन्त, सर्वेषां नेत्राणि, पुनर्, बाष्पैर् अपूर्यन्त । अथ यदा तेषाम् एकैकः पुरो गत्वा श्रीगुरुचरणान् अभिववन्दे तदा ते यथा-पूर्वं स्मित-पूर्वैः प्रीति-स्निग्धैः प्रत्यभिवादन-वचोभिस्तं

प्रत्यनन्दन्। मुग़ल-मदा महता रभसेन श्रीगुरुचरणान् अनु आयासिपुस् तस्माद् निश्चिन्त-मन्त्रणा-ऽवकाशः कुतः? अथाऽपि आगन्तुकेषु केचिद् अभणन् "अद्य-पर्यन्तं जाता क्षतिर् न स्तोक-क्षोभ-करी। भूयोऽपि मुग़ल-शासकैः सह विरोधस्य वर्धने को गुणः? सन्धिर् एव तस्माद् युक्तः। तदर्थं च वयं यतिष्यामहे।" इति। सरल हृदय-भक्त-मुखेभ्यः इदं वचः श्रुत्वा श्रीगुरुचरणैः सस्मितं उदितम्:—"यदि अन्य-धर्मा-ऽसहिष्णुभिर् आततायिभिः सह सन्धिर् एव नीतिमतां मतोऽभविष्यत् तदा न पूज्या-ऽर्जुनदेव-महाभागास् तास् ताः सुदुस्सहाः पीडाः असहिष्यन्त, न च श्रीतेग़बहादुर-पूज्यपादाः शिरोऽदास्यन्त। अस्तु, ये केऽपि न्याय-स्वातन्त्र्योभय-रक्षां न्याय्यां मन्वते, तन्निमित्तं च सर्वं त्यक्तुम् उत्सहन्ते तेऽस्मान् अनुधावमाने रिपुभिः सह भाविनि आयोधने अस्माकं सहयोधिनो भवेयुः।" इति। एतद् अभिधाय ते सत्वरं 'खिदराणा'-दिशि प्रयाताः। आगन्तुकानां मध्यतो भूयिष्ठास् तान् अन्वगच्छन्; अन्ये, पुनः, स्व-गृहेभ्यः प्रतिनिवृत्ताः।

मरु-भुवोऽनेक-क्रोश-व्यापिनि तस्मिन् खण्डे खिदराणा-नाम केवलं सरः, यत् सिक्खानां जल-विषये एकम् आशा-बन्धनं बभूव, १७०६ तमस्य खीष्टाब्दस्य अप्रैल-मासि निर्जलम् आसीत्। श्रीगुरुचरणाम् तत्-सहयायि-सिक्खाश् च तस्मात् सरसः पादोन-क्रोश-दूरम् एकं वालुकोच्चयं स्व-शिविर-भुवम् अकार्षुः; अनुगन्तारः

वचोभिस् तान् भर्त्सयाञ्चक्रे। तेन सङ्कुक्षित-वीर्या इव मुगल-वीरा रोषा-ऽरुण-लोचना भूत्वा प्रलय-वात-वेगेन योद्धुम् आरभन्त। अथ भीषणे रण-सङ्कुले उभयोर् एव पक्षयोर् विपुला भटा वीर-गतिं गताः। तीक्ष्ण-तृषा, पार्ष्णि-दिक्-स्थितैः सिक्खैः क्षिप्तैर् विशिखैश च, निहन्यमाना मुगल-योधा अधीरा भूत्वा पलायितुम् आरब्धाः।

संयुगा-ऽवसाने श्रीगुरुचरणा यदा वालुकोच्चयाद् रुधिरेण पङ्किली-भूतां रण-भुवम् आगतास् तदा अपश्यन् यद् 'एक-वर्जं प्रायः सर्वे सिक्खा वीर-गतिं प्राप्ताः।' इति। तत्र भ्राम्यन्तस् ते क्षत-विग्रहाणां सिक्खानां शोणित-दिग्धानि मुखानि पटेन प्रामृजन्, तेषां शौर्यं, गुरु-भक्तिं सत्त्व-बलं च प्राशंसन्। रटौल-वास्तव्यः, महानसिंहो नाम परम-गुरुभक्त-सिक्खो ऽन्तकाले श्रीगुरुचरण-दर्शनोत्सुकः श्रीगुरुचरणेषु समीपम् आगतेषु क्षणि-बलाभ्यां हस्ताभ्याम् अञ्जलिं बद्ध्वा तान् अवन्दत। मनोरथ-पूर्त्याः हर्षस् तस्य नेत्रयोर् अभासत। श्रीगुरुचरणाः स्व-दक्षिण-हस्तं स-स्नेहं तन्मस्तके निधाय अवदन् :—'वीर! वरं वृणीष्व।" इति। सोऽब्रवीत् :—"श्रीगुरुचरणान् विलोकितवान् अस्मि। नाऽतः परं किमपि मम इष्टम्।" इति। श्रीगुरुचरणानां पुनर् आग्रहम् आलोक्य तेन उक्तम् :—"न किमपि आभ्युदयिकं वाञ्छामि, न वा निःश्रेयसम्। पर यदि श्रीगुरुचरणा मादृशां सिक्खानां अपराधान् मृष्यन्ति तदा पुरा घोरे सङ्कटे गुरु-सेवातो विमुखी-भूय

आनन्दपुरे मया अन्यैश् च यस्मिन् गुरु-भक्ति-त्याग-पत्रे हस्ताक्षराणि कृतानि तत् पत्रं निरर्थकं मन्तव्यं निरसनीयं च।" इति। तत् पत्रं श्रीगुरुचरणैम् ततः प्रभृति यावदद्य सर्वदा स्व-सकाशे अधार्यत। महानसिंहस्य समीहितं श्रुत्वा तैस् तत् पत्रं खण्डशः कृतम्। अनेन निर्वृतो भूत्वा महानसिंहः शान्त्या पर-लोकं जगाम। परिगणनायां कृतायां 'आनन्दपुरे श्रीगुरुचरण-सेवां त्यक्तवत्सु सिक्खेषु चत्वारिंशत्, महानसिंहवत्, जीवित-त्यागेन तत्र रणे पूर्व-पाप-प्रायश्चित्तम् अकार्षुः।' इति विदितम्। 'चत्वारिंशन्मुक्ताः' इत्युक्त्वा श्रीगुरुचरणैस् ते शुभा-ऽऽशिषा सम्भाविताः। तेषाम् अवदानानि आह्निक्यां प्रार्थनायां प्रतिदिनं प्रातश् च सायं च सहस्रैः सिक्खैः स्मर्यन्ते। तदारभ्य खिदराणासरः 'मुक्तसर' (मुक्तानां सरः) इति आख्यायते। 'गुरु-सेवा-त्यागिनः पुनर् गुरुम् उपस्थाय तत्-सेवार्थे च प्राणान् विमुच्य जन्म मरण बन्धनतो विमुक्ताः।' इति ऐतिह्यं सादरं स्मरन्तः प्रतिवर्षं सहस्राणि तीर्थ-यात्रिणस् तत्र सङ्गच्छन्ते, चत्वारिंशन्मुक्तानां पुण्य-कर्माणि स्मारं स्मारं च स्व-धर्म-निष्ठां द्रढयन्ति।

माई-भागो-नाम्नी एका वीर गुरुभक्त नारी, या सेवा-त्यागिनः सिक्खान् अपराध-प्रमार्जनाय तत्र श्रीगुरुचरणानाम् अभ्याशम् आनीतवती, प्रासेन बहून् विपक्षिणो जघान। तां वर्जयित्वा खिदराणा-रणाय सङ्गताः सर्वे सिक्खा वीर-गतिं गताः। साऽपि युद्धे दृढं विक्षताऽभूत्। "श्रीगुरुचरणान् दृष्टवती अस्मि, त्यागिनः पुनः श्रीगुरुचरण योगिनो जाताः, मम समीहितं

सिद्धम् ।" इति विचार्य सा सुतराम् अमोदत ।

श्रीगुरुचरणाऽऽदेशेन खिदराणा-रण भुवि स्थितानां शुष्क-तरूणां काष्ठ-खण्डे, रणे हतानां सिक्खानाम् अन्त्येष्ट्ये, चितासु चित्यासु श्रीगुरुचरणाः स्व हस्तेन हुताशनं प्रावेशयन् । चित्यासु दह्यमानासु ते कस्याचित् वृक्षस्य छायाम् अध्यासत अब्रुवश् च'— "इमे वीरा मुक्तिम्, तथा पुण्यात्म भक्तानां महात्मना च पदवीम्, आपन् ।" इति । तत 'कीर्त्तन-सोहिला' ( सिक्ख धर्मग्रन्थ रचनविशेष-गण ) अपठ्यत, सयाव-'प्रसाद'श् च व्यतीर्यत ॥

---

[ १३ ]

## दमदमा-नाम्नि स्थाने विश्रमः

श्रीगुरुचरणाः [दिल्लीतः पश्चिमोत्तराहि] मालवा-नाम-प्रदेशे पर्यटनाय सिक्ख-धर्म-व्याख्यानाय च 'खिदराणा'तः प्रस्थिताः। सामान्यतः आद्य-गुरु-श्रीनानक-भगवत्-पादानां जीवित-कालाद् एव आरभ्य, तत्र प्रदेशे कृत-भूरि-पर्यटनानां श्रीगुरुहरगोविन्द-हरराय-तेगबहादुर-भगवत्-पादानां कालाच्च विशेषेण, सिक्ख-धर्मः मालवा-प्रदेश-वास्तव्यानां पुष्टा-ऽङ्गानां किन्तु ऋजु-प्रकृतिकानां 'जट्टानां' हृदय-हारी बभूव। सरलाः, व्यवहारिकाः, सिक्ख-धर्म-सिद्धान्ताः कोमल-मतिभ्यः, स्वातन्त्र्य-प्रियेभ्यः, आध्यात्मिक-गूढ-ज्ञान-विवरणेऽनुत्सुकेभ्यः, जटिल-कर्म-काण्ड-विमुखेभ्यस् तेभ्यो भृशम् अरोचन्त। स्व-निवास-भूम्याः मरु-खण्ड-बहुलत्वात् सरहिन्द-लवपुरोभय-क्षत्रपाभ्यां भयम् अजानन्तस् ते श्रीगुरुगोविन्दसिंह-भगवत्-पादेभ्यः, तेषाम् अनुवर्त्तिभ्यः, सिक्ख-धर्माय च स्वागतं व्याजह्रुः, श्रीगुरुचरणानाम् उपदेशैश् च आत्म-सम्भावनां चक्रुः।

क्रमेण कतिपय-ग्रामेषु उषित्वा जनानां मनस्-तापं शमयित्वा च श्रीगुरुचरणा भटिंडा-कोटकपूरा-नगरयोर् अन्तराल-वर्त्तिनि प्रदेशे स्थितं 'लखी-जङ्गलं' ( लखी-नाम-वनं ) प्राप्ताः। तत्र सुलभेन

विविक्तत्वेन स्वातन्त्र्येण च मोहितास् ते कतिपय दिवस-विश्रमाय तत्रैव अतिष्ठन्। अथ तद् वनं स्तोत्र-पदानां, गुरु-दर्शनार्थि-भक्त-जनानां घोटक-खुर-शब्दानां च प्रतिध्वनिना गुञ्जितुम् आरभत। बहवश् चिर-वियुक्ता गुरु-भक्ताः, घोर-विपदां बह्वोः कालाद् अनन्तरं सुलभी-भूताय, श्रीगुरुचरण-दर्शनाय तत्र सङ्गताः। विपत्तिभिर् अनभिभूत-सहज-तेजसः श्रीगुरुचरणा यथा-पूर्वम् एकैकं नवा-ऽऽगतं स्व-शिष्यं प्रतिनन्दनेन समभावयन्।

'लखी-जङ्गल'स्य स उद्देशो यत्र श्रीगुरुचरणा निवासम् अङ्गी-चक्रिरे 'मालवा'-धन्व-प्रदेशे उर्वर-शाद्वल-रूपं दधार। आनन्दपुरवत् तत्राऽपि सिक्खेषु बलवत्तरेभ्यः सार्थकतरेभ्यश् च जीवन-व्यापारेभ्य ईश्वर-प्रेरणा-जन्य उत्साहोऽजायत; तत्र बृहत्तरा भक्त-निवहा गुरूपदेशा-ऽमृत-पानाय आगच्छन्, श्रीगुरु-कर-कमलाभ्यां च खालसा-दीक्षाम् आप्नुवन्। इत्थं सिक्ख-धर्मोऽस्मिन् प्रदेशे दृढ-मूलो बभूव; श्रीगुरु-कर-कमलाभ्यां खालसा-दीक्षां प्राप्ताः सिक्खाः, तेषां वंशजाश् च सिक्ख-धर्मस्य आधार-शिलात्वं गताः। प्रायशस् तेषाम् एव बलेन सिक्ख-समाजो मुग़ल-शासकानाम् आततायि-वृत्तिम् अदमयत्, सर्व-सामान्य-सम्पत्ति रूपां खालसा-संस्थां च स्व-तन्त्र-राज-शक्त्याः रूपं प्रापयत्। 'लखी-जङ्गले' एव इब्राहीम-नामा माहम्मदीय-वैखानसः खालसा-दीक्षाम् अग्रहीत्। असौ खालसा-दीक्षा-ऽनन्तरम् अजमेरसिंहेति

सञ्ज्ञाम् अलभत, श्रीगुरुचरणानां परम-भक्तो भूत्वा च, 'लखी-जङ्गल'त् प्रस्थाय प्रदेशा-ऽन्तरेषु भ्रमतस तान् नित्यम् अनुचचार।

'लखी-जङ्गलं' विहाय कतिपय-ग्रामेषु वसन्तः स्व-भक्तान् दर्शनेन उपदेशेन च अनुगृह्णन्तः श्रीगुरुचरणा एकदा 'तलवंडी-साबो'-नाम-नगराद् नाऽतिदूरम् अध्व-खेदा-ऽपनयनाय अतिष्ठन्, एकं वालुकोच्चयं समी-कर्तुं च आदिशन्। तथा कृते, ते कवचम् अपसार्य समी-कृते स्थण्डले विश्रमाय उपाविशन्। तत्रैव, पुनस्, ते नव मासान् अगमयन्। आनन्दपुराद् निष्क्रम्य ते न क्वचिदपि एतावन्तं कालं शान्त्या न्यवसन्। ततः प्रभृति तत् स्थानम्, तेषां तत्र विश्रमणात्, 'दमदमा' (विश्रम-स्थलम्) इत्याख्यायते।

'भाई-डल्ला'-नामा, गुरु-भक्तः, ग्राम-प्रधानः, श्रीगुरुचरणान् उपेत्य "मम कोटे निवासं स्वी-कृत्य अनुगृह्णन्तु भवन्तो माम्।" इति प्रार्थयत। "ग्रामाद् बहिर् एव निवासो मम प्रियः।" इत्युक्त्वा तस्य कोटे निवासम् अनङ्गी-कृत्य अपि ते तस्य गृहे पञ्च दिवसान् अन्नम् अगृह्णन्। ततो गुरु-भोजन-शालाया निर्माणे जाते अपि गुरु-भक्ति-वशाद् भाई-डल्लाः यथा-पूर्वं श्रीगुरुचरणानां तत्-सिक्खानां वा सर्व-प्रयोजनानि पृणाति स्म।

एकदा डल्लाः अब्रूत :—" 'नाऽहं विपत्-काले भवत्-साहाय्यम्

आचरम् ।' इति खिद्यते मे मनः। यदि, पुनर्, अहं भवतां विपदोऽवेदिष्यम् तदा भवत्-सेवार्थं रण-कर्मणि कृत-हस्तान् स्व पुरुषान् आकारयिष्यम् ।" इति । दैवात् तस्मिन् एव प्रस्तावे एकः सिक्ख-गणो लवपुरतस् तत्र प्राप्तः, एकं नालिका-ऽस्त्रं च श्रीगुरुचरणेभ्यः उपजहार । तद् अस्त्रं प्रशस्य श्रीगुरुचरणा अब्रुवन् :—"अधुनैव एतत् परीक्षणीयम् ।" इति । अथ ते डल्लोपरि दृष्टिं निक्षिप्य अवोचन् :—"अपि भवान् स्व-भटानां मध्यात् तौ द्वौ आह्वाययिष्यति यौ अस्य नालिका-ऽस्त्रस्य लक्ष्यी-भूय दर्शयिष्यतः :—'अस्माद् नालिका-ऽस्त्राद् निःसृता गुलिका कियद्-दूरं प्रयाति ?' इति ?" इति । "अहो नु विचित्रता गुरोः सम्प्रश्नस्य !" इति मनसि विकल्प्य स पुनर् अचिन्तयत् :—"न मम भटेषु कोऽपि मम आदेशेन प्रार्थनया वा आत्मानम् एवं कृतान्त-दंष्ट्रासु पातयितुम् उत्सहिष्यते ।" इति । तत्राऽन्तरे श्रीगुरुचरणा एकं तरुणं तस्य पितरं च शिरसी उष्णीषाभ्यां परिवेष्टयन्तम् अवलोक्य तौ आह्वाययन् । तथा कुर्वन्तौ एव अहं-पूर्विकया धावमानौ तौ उभौ उपेतौ । 'अहं पूर्वं गुलिका-लक्ष्यं भूयासम् ।' इति आशंसन् उभयोऽपि स्व-शिरः अन्यस्य शिरस्तः उच्चैस्तराम् उन्नमयन् गुलिकायाः लक्ष्यी-भूय स्थितः ।

श्रीगुरुचरणैश् चिकीर्षितम् उपदेशम् उन्नीय डल्लः मोघायाः स्व-गर्वोक्त्याः हेतोर् मनसा अनुशयं जगाम । श्रीगुरुचरणास् तं प्रबोधयिष्यन्तोऽब्रुवन् :—"न मम भवतो भवनो भटानां वा अवमानना इष्टा । वस्तुतो ये 'अमृतम्' आनामन्ति खालसा-दीक्षां

च आप्नुवन्ति ते मृत्यु-भयेन विमुच्यन्ते ख़ालसा-सम्प्रदाय-हिते च स्व-जीवितं तृणाय मन्यन्ते।" इति। ख़ालसा-दीक्षा-प्राप्तानां सिक्खानां निर्भीकताया गुरौ निष्ठायाश् च एतदेव रहस्यम्। अथ डल्लः स्वयं ख़ालसा-दीक्षाम्, 'डल्लसिंह' इति नामधेयं च प्राप्तवान्।

अथ न-चिरात् वज़ीरख़ानस्य सकाशात् "तव अतिथी-भूतं गुरुगोविन्दसिंहं मह्यम् अर्पय; अन्यथा घोरं विपत्स्यसे।" इति वाचनिकम् प्राप्य, न कदाचिदपि श्रीगुरुचरणेभ्यः पार्थक्यम् इच्छता, डल्लसिंहेन प्रत्युक्तम्:—"यद् भवति तद् भवतु। न अहं तथा-विधं पापं करिष्ये। अथ च, यदि भवान् बलात् श्रीगुरुचरणान् निग्रहीतुं यतते, तदा ते क्वचिद् गहन-वना-ऽन्तः-प्रदेशं गमिष्यन्ति; तान् अनुधावमानास् तत्र प्राप्ता भवतो भटाश् च खिदराणा-सरः-कलहे यम-लोकं प्रेषितानां मुग़ल-सैनिकानां सरणिं ग्राहयिष्यन्ते।" इति। श्रीगुरुचरणा डल्लसिंहस्य गुरु-भक्तिम् अभ्यनन्दन्, परं न स्व-कारणात् तस्य विपत्तिम् अन्वमोदन्त। कञ्चन कालं 'तलवंडी-साबो'-नाम-नगरस्य दूरेण तिष्ठासन्तः, भटिंडा-दुर्गं च दिदृक्षन्तः ते ततः प्रस्थिताः। भटिंडा-नगरं प्राप्य तत्रत्य-पौरान् तदन्तिक-प्रदेश-निवासिनश् च अत्याहिता-ऽऽविष्टान् कृत्वा वर्त्तमानम् आततायिनं दुर्गा-ऽधिपतिं ततोऽपवाह्य ते भटिंडा-दुर्गस्य शिखरे एकस्याम् अट्टालिकायां वासं स्वी-चक्रुः। श्रीगुरु-चरणा-ऽनुरागिभिः पटियाला-राज्य-सैनिकैम् तत्र निर्मापितं सिक्ख-धर्ममन्दिरं पश्यन्तो जना अद्याऽपि श्रीगुरुचरण-प्रवासस्य स्मरन्ति।

अथ पथि तं तं ग्रामम् उपवसन्तः श्रीगुरुचरणा भटिंडातः पुनर् दमदमा-साहिब नाम-वास स्थानं प्रत्यागताः। सुन्दरी साहिबकौर नाम्न्यौ तेषां पत्न्यौ दिल्लीतम् तत्र प्राप्ते, बाल-वयस्कानां चतुर्णां तनयानां शरीर त्याग स्मारं स्मारं च अश्रूणि मुञ्चन्त्यौ करुणं व्यलपताम्। उभे सान्त्वयन्तः श्रीगुरुचरणा अवोचन् :—"हे हो! न तेषां कृते रोदनं परिदेवनं वा युज्यते। ते हि धर्म्ये सङ्ग्रामे देहान् हित्वा अमरतां गताः। तेषां वीर्य-कर्माणि ध्यायं ध्यायं लोकम् तैर् दर्शिते धर्म्ये वर्त्मनि वर्तितुं यतिष्यते। ते चत्वारो न म्रियन्ते चेत् किमु तर्हि! अस्मान् अभितः स्थितानाम् अमीषां सहस्राणां सिक्खानां जीवातवे ते स्व-जीवितानि विसृष्टवन्तः।" इति।

दमदमा नाम श्रीगुरुचरणानां वास स्थानं तद् नियुक्तानां भक्तानां कृते पुनः सन्नियोग क्षेत्रम् अजायत। तथाहि, श्रीगुरुचरणान् अन्विष्यन्तो बहवः सिक्खाः, श्रीगुरुचरणाऽऽश्रिताश् चारणाः कवयश् च तत्र आगताः श्रीगुरुचरणान् विलोक्य च अतीव मुदिताः। पर्वतीया-ऽऽनन्दपुरस्य आत्मा धान्वन दमदमा-साहिबे पुनर् जन्म जग्राह, पुरातनी च प्रात्यहिकी प्रक्रिया इहाऽपि प्रारब्धा। प्रगे धर्म-ग्रन्थ-पाठाय सम्पद्यमानः धर्म समागमः, उत्साह-सन्धुक्षणं श्रीगुरुचरण कृतं धर्म ग्रन्थ व्याख्यानम्, भक्ति-वीरोभय-रसाऽऽर्द्रं कवीनां चारणानां च काव्यम्, मानव-जीवनस्य नव-रूपताऽऽपादकं नव प्रभया उपस्कारकं च अन्यत् सर्वम् पुनर् दैनिक-व्यापाराणां रूपं दधार।

विद्वत्-तल्लजः, श्रीगुरुचरण-सतीर्थ्यः, भाईमनीसिंहोऽपि, अन्या-ऽनेक-भक्त-सुहृद्वत्, तत्र आगतः। "श्रीपूज्या-ऽर्जुनदेव-सम्पादिते 'आदि-ग्रन्थे', प्रतिलिपिकर-स्खलन-वशाद्, बहवः पाठ-भेदा दृश्यन्ते। तस्मात् स पुनः सूक्ष्मेक्षिकया सुसम्पादनम् अपेक्षते।" इति आकलय्य श्रीगुरुचरणाम् तदर्थम् असज्जन्त। 'पवित्रं कार्यं खलु इदम्।' इति विचार्य पृथग् एकं पट-वेश्म संस्थाप्यते स्म। तत्र च भाई-मनीसिंहेन द्वितीयाः श्रीगुरुचरणाः प्रत्यहं सततं चिरं तत्-कार्य-व्यापृता अतिष्ठन्। यथा पुरा काले श्रीपूज्या-ऽर्जुनदेव-पादैः पठ्यमानं 'ग्रन्थं' भाई-गुरुदासो लेखन्या कर्गलम् आरोपयत् तथैव श्रीगुरुगोविन्दसिंह-भगवत्-पादैर् उच्चार्यमाणं 'ग्रन्थं' भाई-मनीसिंहो लेखा-ऽर्पितम् अकरोत्। भाई-गुरुदासेन लिखिते आद्य-पञ्च-गुरुवाणी-सङ्ग्रह-रूपे 'आदि-ग्रन्थे' फ़रीद-कबीर-रविदास नामदेव-भिक्खन-प्रभृतीनां माहम्मदीय-सूफ़ी-(भक्त)-कवीनां हिन्दु-भक्त-कवीनां च काश्चित् कृतयः समाविष्टा अभूवन्। श्रीगुरुगोविन्दसिंह-भगवत्-पादाः स्व-पितृपादानां श्रीगुरुतेगबहादुर-भगवत्-पादानां कृतीस् तत्र समावेशयन्, न परं स्वकीयाः। उत्तर-काले तेषां कृतयो भाई-मनीसिंहेन सङ्कलिताः, सम्पादिताश् च। तत् सङ्कलनमेव 'दशम-ग्रन्थ' (दशमगुरु-रचना-सङ्ग्रह-ग्रन्थः) इति ख्यायते।

दमदमा-साहिबे आदि-ग्रन्थस्य सम्पादन-कर्मणि निर्व्यूढे परमेश्वरा-ऽनुग्रहस्य यथा-विधि वाचा प्रकाशनम् अभूत्। अथ ग्रन्थ-लेखन-विनियोगि मसी-पात्रं लेखनी-जातं च लेखन-कार्या-ऽऽलय-

मृतस्य पट-वेश्मनः समीपे सरसि प्रक्षिप्य श्रीगुरुचरणैर् घोषितम् :—
"दमदमा-नाम-स्थानं सिक्खानां काशी, विख्यातं विद्या-पीठं च भविष्यति। बहवो जना अत्र विद्याम् उपार्जिष्यन्ति, अज्ञानेन विमुच्य ग्रन्थकाराः, मुनयः, कवयः, भाष्यकाराश् च भविष्यन्ति।" इति। तदारभ्य तत् सरः, साहित्य-सृष्ट्ये सम्प्रेरकत्वाद्, 'लिखन सर' इत्युच्यते। 'गुरु की काशी' (गुरोः काशी) इत्यपर-नाम्ना प्रसिद्धे तस्मिन् दमदमा-साहिब-नाम-नगरे समुत्पन्नानां सिक्ख-सम्प्रदायीयेषु धर्मग्रन्थेषु इतिहासेषु च निष्णातानां कोविदानां काऽपि निरन्तरा परम्परा प्रवर्त्तमानाऽस्ति। तत्रत्या धर्मग्रन्थ-भाष्यकाराः सिक्ख-सम्प्रदाये परम-प्रमाणत्वेन प्रतिष्ठां प्राप्तेषु विद्वत्सु गण्यन्ते। यावत्-कालं ग्रन्थ-मुद्रणं प्रथां नाऽऽगात् तावत्-कालं दमदमा-साहिब-वासिना लिपिकरेण लिखितः सिक्ख-धर्म-ग्रन्थो महा-ऽर्घं महा-ऽऽदरा-ऽऽस्पदं च अभूत्। दमदमा-साहिबे परम्परया प्रचारम् आगच्छन्ती हस्त-कृता गुरुमुखी लिपिर् एव प्रमाणम् आसीत्, सैव च गुरुमुखी-मुद्रणा-ऽक्षराणां जननी वर्त्तते।

'फुलकियाँ'-राज्या-ऽधीश्वराणां पूर्व-पुरुषौ राम-तलोक-नामानौ, गुरु-भक्तौ, श्रीगुरुगोविन्दसिंह-भगवत्-पादानां कर-कमलाभ्यां खालसा-दीक्षाम् अवाप्य रामसिंह-तलोकसिंहौ जातौ। तयोः पूर्व-पुरुषः, 'फूल' इति ख्यातः, श्रीगुरुहरराय-भगवत्-पादानाम् 'तव कुलधरः स्व तन्त्र-नरपति-पदं प्राप्स्यति।' इत्याशिषो भाजनम् अभूत्। राम-तलकौ स्वयं 'मुगल-शासकानां कोप-भाजनतां

गतस्य उपरि का नाम विपत्तिर् न आपतति।' इति सम्यग् विदन्तौ अपि चमकौरे धर्म-वीर-गतिं गतयोः श्रीगुरुचरण-सुतयोः अन्त्येष्टिं यथा-विधि विधाय महतीं गुरु-कुल-सेवाम् अनुष्ठितवन्तौ। रामसिंहात् पटियाला-राजवंशः प्रावर्त्तत, तलोकसिंहाच्च नाभा-जीदँ-राज-वंशौ। दमदमा-साहिबे ख़ालसा-दीक्षां जिघृक्षूणां सङ्ख्या कदाचन तथा विशाला अभूद् यथा 'अमृतं' लोह-कटाहे उत्पाद्यते स्म, न शरावे। तत्र गुरु-भक्तानां लक्षं श्रीगुरुगोविन्दसिंह-भगवत्-पादानां कर-कमलाभ्यां ख़ालसा-दीक्षां प्राप।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानां दमदमा-साहिब-निवास-काले यो वैशाख-सङ्क्रान्ति-दिवसः समायातः स ख़ालसा-संस्थायाः जन्म-दिवसत्वेन अमान्यत। तदा भारतवर्षस्य नाना-दिग्-देशेभ्यो बहवः सिक्खास् तत्र आगताः श्रीगुरुचरण-दर्शनेन च प्रमुदिताः। ततः प्रभृति दमदमा-साहिबे वैशाख-सङ्क्रान्ति-दिवसः प्रतिवर्ष महता धर्मा-ऽनुरागेण उत्साहेन च मान्यते॥

---

[ १४ ]

## खालसा-संस्थया सह तादात्म्यम्

दयासिंह-धरमसिंहयोर् हस्तेन अवरङ्गज़ेबाय प्रहित श्रीगुरुचरणानां पत्र, वक्र-वचो-भङ्गिभिर् निबद्धत्वात् तिक्तं सदपि, न लक्ष्याच् च्युतम्। तस्य वाचनाद् वृद्ध-रुग्ण-सम्राजो हृदयं द्रवी-बभूव। परमात्मान तम्य न्यायित्वं च सदा एकनिष्ठतया स्मरता येन नर-वरेण तत् पत्रं लिखित तस्य निश्छलत्वं निर्भीकत्व च सम्राजो मनसि श्लिष्टम्। रोग-शय्या-गत एव स दिल्ली-स्थिताय, मुन् इम्-खान-नाम्ने, अमात्याय पत्रम् अलेखयत्। तत्र लिखितम् :—"गुरुगोविन्दसिंहे मित्रवद् वर्त्तस्व, त दिल्लीम् आगन्तुं निमन्त्रयस्व, तत्र आगतस्य तस्य मदीय शासन-पत्रं श्रावय, तम् इह मत्-सकाशम् आगन्तु च कथय। अथ गुरोर दक्षिणापथ-यात्रा-कृते यावद् द्रव्यं तेन अपेक्ष्यते, राज-कोपे राज-धनत्वेन निहितायाः तस्य सम्पत्त्याः मध्यात् तावद् द्रव्य तस्मै देहि, एकं पथ-प्रदर्शकं तस्य अधीन कुरु, स्व-शासन-प्रदेश-सीमा यावच्च तम् अनुगच्छ।" इति। तत् पत्रम् आदाय सम्राजो वेत्र धर., मुहम्मदबेगः, श्रीगुरुचरण प्रणिधिभ्या दयासिंह धरमसिंहाभ्यां सहित, उत्तरापथाय प्रस्थित।

श्रीगुरुचरणा', पुनर्., अत्र विषये न किमपि अबोधन्।

अवरङ्गज़ेबस्य निवास-नगरम् अहमदनगरं प्राप्य, श्रीगुरुचरण-सन्देशहरयोर् मध्यतः, दयासिंहेन श्रीगुरुचरणेभ्यः केवल एष समाचारः प्रेषितो यद् "विविध-बाधा-सद्भावात् सम्राजः साक्षात्कारोऽद्यावधि दुःसाधः।" इति। तदुत्तरतया श्रीगुरुचरणैर् लेखितम् :—"धैर्यम् अवलम्ब्य स्थातव्यम्।" इति, अहमदनगर-वास्तव्य-सिक्खेभ्यश् च सन्देशः प्रेषितः "यत् प्रयोजनम् उद्दिश्य मम प्रणिधी तत्र प्राप्तौ तस्य साधने तयोः साहाय्यं विधीयताम्।" इति। तस्माद् अनन्तरं दयासिंहस्य सकाशात् कस्यचिद् समाचारस्य अप्राप्तेः, नवतिवर्षवयसो ऽवरङ्गज़ेबस्य अस्वास्थ्य-वृद्ध्याः समाचाराणाम् अनुदिनं प्राप्तेश् च, श्रीगुरुचरणाः स्वयम् अवरङ्गज़ेबस्य दिदृक्षया दक्षिणापथं गन्तुम् उद्यताः।

"श्रीगुरुचरणाः सर्वदा इहैव निवत्स्यन्ति, न कदाचिदपि अन्यत्र प्रवत्स्यन्ति।" इति विचार्य मोदमानो डल्लसिंहः, दमदमा-वास्तव्यो ऽन्य-सिक्ख-वर्गश् च, श्रीगुरुचरणानां मनीषितं निशम्य नितरां व्याकुलो बभूव। डल्लसिंहः, भाई-रूपा-वंश-धरः धरमसिंहः, फूल-कुल दीपौ रामसिंह-तलोकसिंहौ, कोठागुरु-वासी अभयरामसोढी, चक-नाम-ग्रामा-ऽभिजनो भाई-रामासिंहः, भूचु-वास्तव्यो भाई-गोडादरियाः, दानसिंह-ब्रारः, अन्ये च बहवः प्रमुखाः सिक्खाः श्रीगुरुचरणान् पुनः पुनः प्रार्थयमाना अब्रुवन् :—"प्रभो! भवान्, महाराज इव, इह 'राज-सभया' सुहृद्भिः शिष्यैश् च उपास्यते। तत् कुतो भवान् ऊपराय दक्षिणापथाय प्रतिष्ठते?" इति।

श्रीगुरुचरणाः प्रत्यवोचन् :—"असंशयं दमदमातो रमणीयतरा वास-भूमिर् न विद्यते। अथाऽपि कार्यस्य गौरवाद् मया अवश्यं दाक्षिणापथाय गन्तव्यम्।" इति।

अथ श्रीगुरुचरणान् अनुसर्त्तु-कामाः अनेके सिक्खाः अश्वान् आरोहन्; परं मनीसिंहः, धरमसिंहः, मानसिंहः, भाई-भगतु-वंश-जन्मा रामसिंहः, दानसिंह-सूनुः, गुरुबख्शसिंह-भ्रारः, तथा चाऽन्ये कतिचिदेव श्रीगुरुचरणैर् अनुज्ञायन्ते स्म। प्रस्थाना-ऽवसरे श्रीगुरुचरणाः श्रीगुरुतेगबहादुर-सिक्खधर्ममन्दिरं गत्वा तत्र ईश्वर-प्रार्थनां च अनुष्ठाय, १७०६ तमस्य ख्रीष्टाब्दस्य आक्तोबर-मासि, प्रस्थिताः। अप्रमादिभी रक्षिभिः परितो रक्ष्यमाणे तत्-कलत्रे च दिल्लीं गते।

सिरसा-( बीकानेरराज्या-ऽन्तर्गत )नौहर-सङ्ग्रो-माधोसिंहाना-पुष्कर-प्रभृतीनि नगराणि अधिवसन्तः, 'राजस्थाना'-ऽन्तःपातिना पथा, श्रीगुरुचरणाः, दादुदयाल-नाम-साधु-प्रवरस्य निवास-हेतोः 'दादुवाड़ा' इत्यपर-नामधेयं, नरायणपुरं प्राप्य दादुदयाल-समाधेर् अन्तिकेन वसतिम् अकुर्वन् बाणं च आ-मस्तकम् उद्यम्य दादुदयाल-समाधिं प्राणमन्।

तेषां तत् कर्म धर्म-विरुद्धं मत्वा सिक्खाम् तेषां दण्डनाय अमन्त्रयन्त।

मानसिंहो ब्रूते स्म :—"प्रभो! भवता एव समाधि-प्रभृति-स्थानानां पूजा निषिद्धा।" इति।

श्रीगुरुचरणाः तत् क्षणं दण्डत्वेन निर्धारितं धनं दातुम् उद्यता अभूवन् ।

"पञ्च सहस्राणि ।" इति दण्ड-निर्णये जाते कोऽपि सिक्खः "अतिमात्रः ।" इत्यभिधाय "पञ्च शतानि उचितः [दण्डः] ।" इत्यवदत् ।

अन्योऽवदत् :—"पञ्च लक्षाणि ।" इति ।

"श्रीगुरवः पञ्च लक्षाणि अपि दातुं शक्नुवन्ति । अन्ये सिक्खाः, पुनः, एवं-विधस्य अपराधस्य हेतोर् एवं-विधं दण्डराशिं दातुं न प्रभविष्यन्ति ।" इति विमृश्य स-पाद-शतं दण्डो निर्धार्यते स्म । अथ श्रीगुरुचरणैर् दत्तेन दण्ड-धनेन तेषाम् अनुयायिनो भोजन-शालायै पट-वेश्म अक्रीणन् ।

अवरङ्गज़ेबस्य सकाशात् प्रतिनिवर्त्तमानो दयासिंहो बाघौड़-नाम-स्थानस्य परिसरे प्रवसतः श्रीगुरुचरणान् उपागतः, स्वकीयं सर्वं वृत्तम्, "दिल्लीस्थाय अमात्य-मुन्-इम्-ख़ानाय, प्रेषितम् सम्राट्-पत्रम् आदाय सम्राड्-वेत्रधरः, मुहम्मदबेगः, दिल्ली-मार्ग-पथिको वर्त्तते ।" इति च न्यवेदयत् । अथ १७०७ तमे ख़ीष्टाब्दे फ़ेब्रुआरि-मासस्य विंशे दिवसे अवरङ्गज़ेबः पर-लोकं गतः । तस्य निधनं श्रुत्वा अग्रतः दक्षिणापथ-यात्रां व्यर्थां समर्थ्य श्रीगुरुचरणाः, अनुयायिभिः सह, उत्तरापथाय परावृत्ताः, दिल्ल्यां प्रवसन्त्योः स्व-पत्न्योः सकाशं च प्रत्यागताः ।

पितृ-द्रोह-कारणात् पित्रा निर्वासितम् अकबरं वर्जयित्वा, अवशिष्टाः, अवरङ्गज़ेबस्य त्रयोऽपि तनुजाः राज-सिंहासनम् अभ्यलपन्। तेषां ज्येष्ठः, मुअज़्ज़मः, अवरङ्गज़ेबस्य पर-लोक-गमन-समये उत्तर-पश्चिम-प्रदेशस्य क्षत्रप-पदम् आरूढः कुभा (काबुल्)-नगरे न्यवसत्। यथा स तत्र आत्मनो नृपतित्वम् अघोषयत्, तथा द्वितीयः, आज़मः, दक्षिणापथे। उभौ एव च भारत-राजधानीं हस्त-गतां चिकीर्षन्तौ आतुरतया तां प्रति प्रधावितौ। भाई-नन्दलालो नाम प्रभाववान् गुरुभक्तश् च यः सिक्खो मुअज़्ज़मस्य विश्वास-भूमिः सचिव-विशेषो बभूव तेन कोप-दण्डाभ्यां विहीनाय मुअज़्ज़माय निवेदितम् :—"श्रीगुरुगोविन्दसिंहः साहायकस्य कृते प्रार्थनीयः।" इति। "साम्प्रतं गुरोर् न किमपि समुचित-साहाय्य-करं सैन्य-बलं विद्यते।" इति विजानताऽपि मुअज़्ज़मेन स्व-सचिवोक्तं कृतम्।

अवरङ्गज़ेबस्य पुत्रेषु ज्येष्ठत्वाद् मुअज़्ज़मो राज-सिंहासनाऽर्हः, लोके च 'सदाशयः।' इति विश्रुतः, बभूव। तस्य कर्माणि अपि तस्य सदाशयतां व्यञ्जन्ति स्म। तथाहि, यदा अवरङ्गज़ेबस्य आदेशाद् असौ श्रीगुरुचरणान् पार्वतेयान् नृपतीन् च दण्डयितुं पञ्चापम् आगच्छत्, तदा स श्रीगुरुचरणानाम् अध्यात्म-पदोच्चतायाः स्मरन् दूरेण, स्वपुरे, अतिष्ठत्। तेन प्रेषितः मिर्ज़ाबेगो नाम सेना-ऽध्यक्षः पार्वत्यान् नृपान् अदण्डयत्, न पुनः श्रीगुरुचरणान् कथञ्चिदपि अक्लेशयत्। अपरञ्च,

अस्ति तावत् श्रीगुरुनानक-प्रसूतस्य गुरु कुलस्य रीतिः "द्वारम् उपागत· प्रार्थी न मोघाशः परावर्त्तेत।" इति । एतस्मात् कारण-द्वयाद् यत् किञ्चित् सिक्ख-चलं तदानीं प्रत्याहर्त्तुं शक्यम् अभूत् तद् धरमसिंहा-ऽधिष्ठित विधाय श्रीगुरुचरणैर् मुअज्जमस्य साहाय्ये प्रेषितम् । 'आगरा'-नगरस्य अन्तिकेन जैजौ-नाम-स्थाने आज़म मुअज्जमयोर् युद्धे तारुण्यशालिभ्यां स्व-तनयाभ्यां सहितः आज़मो हतः । अथ मुअज्जम· 'बहादुरशाह' इति नाम्ना सम्राड् बभूव । स श्रीगुरुचरणानाम् उपकृतेः सा-ऽऽदरां स्मृतिं सिक्ख बला-ऽध्यक्षस्य धरमसिंहस्य मुखेन तान् प्रति प्रकाशयामास ।

नचिराद् अनन्तरं श्रीगुरुचरणा दिल्लीतः प्रस्थाय मथुरायां वृन्दावने च उषित्वा 'आगरा'-नगरं प्राप्ताः, नगराद् बहिर् एकस्मिन् उद्याने च वसतिम् अकार्षुः । तेषाम् आगमनस्य प्रवृत्तिम् उपलभ्य बहादुरशाहस् तान् राज-भवना-ऽऽगमनाय आमन्त्रयाञ्चक्रे । वरिष्ठैः सिक्खैः सह श्रीगुरुचरणेषु तत्र प्राप्तेषु स महता सम्भ्रमेण तान् अभ्यनन्दत्, तैः सह समागमात् जातं स्व-हर्षं वाचा प्राकाशयत्, जैजौ रणे तैर् लम्भितस्य साहाय्यस्य कारणाच्च तेषां धन्य-वादान् अवादीत् । अथ श्रीगुरुचरणानां राज भवनात् प्रस्थाना ऽवसरे स तेभ्यो रत्ना-ऽलङ्कृतेन सिचयेन सहितं महा ऽर्घं वस्त्र-युगलं धुगधुगीं ( वक्षसि धारणीयम् अलङ्कार भूतं 'जाकेट्' इति नाम्ना प्रसिद्धं वस्त्र-विशेषम् ) कल्गीं (मुकुट) च उपहृत्य तान् सभाजयामास । सभा-भवनस्य

द्वारे प्रतिपालयन् श्रीगुरुचरण सेवक आहूयत; स च सर्वम् उपहार-वस्तु-जातं गृहीत्वा श्रीगुरुचरण-शिविरं प्रापयत्।

श्रीगुरुचरणानां सम्राजा बहादुरशाहेन सह मिलनेन उभयोर् मिथः सौहार्दम् अवर्धत, "माहम्मदीय-धर्माद् इतरान् धर्मान् प्रति सम्राजो व्यवहारः कीदृशो भवेत्।" इति विषयम् आदाय तयोः सङ्कथा च प्रारभ्यत। विषयस्य गभीरत्वात् तत्र उभयोर् ऐकमत्येन "एषा सङ्कथा पुनर् मिथो-मिलना-ऽवसरेषु सम्प्रवर्त्तेत।" इति निश्चीयते स्म। "प्रारब्धाम् एतां सङ्कथां समाप्य एव पञ्चापं प्रतिनिवर्त्तिष्ये।" इति विचार्य श्रीगुरुचरणास् तत्र स्व-प्रवासम् अदीर्घयन्, आत्मनः एतं विचारं च पत्रम् आरोप्य तत्र तत्र सिक्खेभ्यः प्राहिण्वन्। धौल-नाम-नगरस्य सिक्ख-समाजाय प्रहितं तेषाम् ईदृशं पत्रं नचिरात् पूर्वं प्रकाशम् आगतम्। तत्र विन्यस्तम्:—

"स्वस्ति धौल सङ्गताय (धर्म-समागमाय)। यूयं मम खाल्साः (मित्त्राः) स्थ। भगवान् भद्रं वो वितरतु। 'गुरु गुरु' इत्येवं परमेश्वरस्य नामधेयं नित्यं कीर्त्तनीयम्। अथ स-हर्षं विज्ञाप्यते यद् वयं पादशाहं (सम्राजं) दृष्टवन्तः। स च अस्मभ्यं षष्टि-सहस्र-मूल्यकं सम्मानना-वस्त्र-युगलं धुगधुगीं (वक्षसि धारणीयम् अलङ्कारभूतं 'जाकेट' इति नाम्ना प्रसिद्धं वस्त्र-विशेषम्) च उपायनी-कृतवान्। गुरोर् अनुकम्पया सर्वम् अन्यद् यथा पूर्वं वर्त्ततीति। अपरञ्च, कतिपय-दिनेभ्योऽनन्तरं वयं

पुरा प्रतिनिवर्त्तामहे। सर्व-सिक्खानां कृते अस्माकम् उपदेशः तु एपः 'संहताः तिष्ठन्तु।' इति। यदा वयं काहलूर-नाम-स्थानं प्राप्नुमः, तदा सर्वे सिक्खाः शस्त्रा-ऽस्त्र-सन्नद्धाः भूत्वा तत्र उपयन्तु। यः कोऽपि तत्र आगन्ता, आनन्दिता। १७६४ तमे [वैक्रम] सम्वत्सरे, [सौर] कार्त्तिकस्य प्रथमो दिवसः।" इति।

बहादुरशाहः, पुनः, नचिराद् अनन्तरम्, दक्षिणापथे कामबख़्शेन उत्पाद्यमानं विद्रोहोपद्रवं प्रशमयितुम् आगरातः प्रस्थितः। तेन सह समारब्धां सङ्कथां निर्वोढु-कामाः श्रीगुरुचरणा अपि तेन सह दक्षिणापथाय प्रयाताः, न पश्चापं परावृत्ताः। तस्यां यात्रायां प्रजा-नाथस्य धर्म-नाथस्य च शिविरं सह एव पुरः प्रासर्पत्, प्रेयः श्रेयश् च विषयी-कृत्य उभौ बहुशः चिरं मिथः समालपताम्। श्रीगुरुचरणाः यात्रा-मार्ग-जनपद-जनानां धर्मोपदेशं कर्त्तुं यदा-तदा यात्रा-क्रमम् अपि अभञ्जन्।

उभय-शिविर-गताः पुरुषाः प्रायशः परस्परस्मिन् कलहायन्ते स्म। यतो हि, इदानीं सम्राड्-सेवकेषु अनुप्रविष्टाः ये मुग़ल-भटाः पुरा सरहिन्द-क्षत्रप-वज़ीरख़ान-सेना-ऽन्तर्गताः सन्तः आनन्दपुरे सिक्खैः सह अयुध्यन्त, गुरुं प्रति सम्राजः सद्भावनामयो व्यवहारः सिक्ख-द्विषां तेषां न सुखायते स्म। ते हि सा-ऽभिप्रायं सिक्खान् अदुःखायन्त, सिक्खाश् च 'शठं प्रति शाठ्यम्' आचरन्। एकदा एतादृशे कलहे उत्थिते श्रीगुरुचरणाः पक्ष-द्वय-प्रबोधनेन कलह-शान्तये व्यवहार-पटुं चतुर-मतिं मानसिंहम्

आदिशन् । अहो बत तस्य शम-प्रधानं प्रयोजनं प्रयासं च अवधीर्य कोऽपि मुगल-बल सैनिकः तं शान्ति-दूतं तत्रैव सहसा अवधीत् । चमकौर-रण-कालाद् आरभ्य अद्य पर्यन्तं मानसिंहो निरन्तरं श्रीगुरुचरण-सङ्ग-लग्नो ऽतिष्ठत्; तस्य एवं निधनं महा-शोक-जननम् अभूत् । एतद् वृत्तं श्रुत्वा विषादम् आगतेन बहादुरशाहेन आदेशः कृतः :—मानसिंहस्य घातको निगडनीयः, श्रीगुरु-गोविन्दसिंहाय च अर्पणीयः । स तस्य दण्डने प्रमाणम् ।" इति । बहादुरशाहस्य पुरुषैः स्वामिनः आदेशे अनुष्ठिते श्रीगुरुगोविन्दसिंह-भगवत्-पादास् तं नृशंसम् अक्षमन्त; स च अनामयं स्व शिविराय अगच्छत् ।

तस्यां यात्रायां जयपुर-जोधपुर-चितौड़-नगराणाम् अन्तिकेन श्रीगुरुचरणेषु प्राप्तेषु तत्रत्याः नरपतयः स्व-दूत-मुखेन तान् अनमस्यन् । इत्थं पुरः प्रसर्पन्तौ उभौ लोक-नायकौ रेवाम् उत्तीर्य, भूयो दक्षिणाद्रि, १७०८ तमस्य ख्रीष्टाब्दस्य सेप्तम्बर-मासि, गोदावरी-तीरे नॉदेड़-नाम नगरं प्राप्तौ । एतावति काले गतेऽपि न तयोः सत्कथा परिसमाप्तिं गता । अथ श्रीगुरुचरणैर् विभावितं यद् "बहादुरशाहः प्रायशः मत्कथां परिहरन् आस्ते, अवरङ्गजेब-शासनस्य काले शासनाधिकारिभिः कृतानां प्रजा प्रपीडन कर्मणां विचारणां न विशेषेण परिहरति । किञ्च, बहादुरशाहः सरहिन्द-क्षत्रप-वज़ीरखान-सदृशेभ्यो धर्म-कठोरेभ्यः शासना-ऽधिकारिभ्यो न अलम् ।" इति । एवं-गते श्रीगुरुचरणैर् विचारितम् :—"मत्कथायाः दीर्घी-करणे को गुणः !" इति ।

'बहवोऽस्य सिद्धयः, तत्-कृताः शक्तयश् च।' इति लब्ध-कीर्त्तिः, माधोदास-नामा, कोऽपि 'वैरागी'-कुटीचरः, तेषु दिवसेषु, नाँदेड़म् आराद् गोदावरी-तटे प्रतिवसति स्म। तस्य आश्रम-पदं प्राप्य, तं च तत्र असन्निहितं दृष्ट्वा, तं प्रतीक्षमाणाः श्रीगुरुचरणास् तस्य शय्या-भूते काष्ठ-फलके अशेरत, तेषां सहचराः सिक्खाश् च सायन्तना-ऽऽहाराय अजम् अघ्नन्। आश्रमं प्रत्यागतो माधोदासो यावत् सर्वम् एतत् पश्यति तावत् क्षुधा सञ्ज्वलति, आश्रमे एवं पापम् आचरताम् नराणां दण्डनाय च स्व-सिद्धि-शक्तीः अनुसन्दधाति। परं यस्मिन् क्षणे स श्रीगुरुचरणान् आलोकते, तस्य 'प्रचण्डः कोपः सिद्धि-शक्तिश् च' इति उभयम् अपि एक-पदे प्रशाम्यति, स च, दण्डवत्, भूमौ निपत्य, श्रीगुरुचरणान्, प्रणमति, 'अहं तव बन्दाः (दासः)।' इति च व्याहरति।

बटाला-वास्तव्यस्य अहमदशाह-नाम-विदुषः पूर्व-पुरुषास् तदानीन्तनम् ऐतिह्यं कर्गलम् आरोपयन्। तद् उपजीव्य अहमद-शाहः 'ज़िक्रे-गुरुआँ व इब्तिदाए-सिंघाँ व मज़्हबे-ईशाँ' (गुरूणाम् सिंहानाम् उत्पत्तेः, तत्-सम्प्रदायस्य च कथा)-नामनि स्व-प्रणीते सन्दर्भे श्रीगुरुगोविन्दसिंह-भगवत्-पादानां माधोदासेन सह संवृत्तं संवादम् एवं वर्णयति :—

माधोदासः—कस् त्वम्?

श्रीगुरुचरणाः—स, यं त्वं वेत्थ।

माधोदासः—किम् अहं वेद ?

श्रीगुरुचरणाः—चिन्तयस्व स्व-मनसि ।

माधोदासः—( क्षणं विरम्य ) अहो श्रीगुरुगोविन्दसिंहो भवान् !

श्रीगुरुचरणाः—आम् ।

माधोदासः—किमर्थम् इह आगतो भवान् ?

श्रीगुरुचरणाः—तुभ्यं स्व-शिष्यता-दीक्षां दातुम् ।

माधोदासः—प्रभो ! प्रणतोऽस्मि । अहं तव बन्दाः (दासः) ।

अथ यथा-विधि खालसा-दीक्षां गृहीत्वा माधोदासः 'गुरुबख्शसिंहः' अभवत् । कतिपयान् सह-यायिनः, आत्मनः इषुधेः पञ्च इषून् च तस्मै प्रदाय श्रीगुरुचरणाः आदिशन्:— "गच्छ ! पञ्चापे अन्याय-परायणानां नृशंसानां क्षत्रपाणां बलं ध्वंसयितुं तैः सह युध्यस्व ।" इति ।

'बन्दासिंह' इति विख्याततरेण नाम्ना सुविदितः गुरुबख्शसिंहः पञ्चापम् आगत्य श्रीगुरुचरणा-ऽऽदेशम् अपालयत्, विजयम् अनु विजयम् आर्जयत्, सरहिन्द-क्षत्रप वज़ीरख़ानम् अदण्डयत्, मुग़ल-राज्यस्य मूलं च अधूनयत् । मुग़ल शासकैः महता आयासेन, येन केन प्रकारेण, वशी-कृतः, निगडितः, सः, १७१५ तमे ख्रीष्टाब्दे, दिल्ल्यां मनुष्येण वक्तुम् अपि अयुक्तया विधया व्यापाद्यत ।

श्रीगुरुगोविन्दसिंह-भगवत्पादाः पाटलिपुत्रे अनुजानन्ती-

तीरम्, आनन्दपुरे अनुशतद्रु-तटम्, पाओन्टा-ग्रामे अनु-कालिन्दी-कूलम् अध्युषितवन्तः। तस्माद् नदी-निकट-निवासस् तेषां विशिष्य आनन्दनो बभूव। इदानीम्, मराल-गत्या गच्छन्त्याः गोदायास् तटे, प्रकृत्याः प्रविविक्त-प्राङ्गणे, स्थितं 'नाँदेड़'-नगरं तेषां हृदयम् जहार, ते च तत्रैव वसंति स्वी-चक्रुः। हन्त! तेषां लोक-लीला-ऽवसान-कालः, पुनः, प्रत्यासीदति स्म।

बहादुरशाहं श्रीगुरुचरणेषु सुहृद्वद् वर्त्तमानं, तौ च सह दक्षिणापथाय प्रयान्तौ, अवलोकयतः सरहिन्द-क्षत्रप-वज़ीरख़ानस्य मनो भृशम् अदूयत। "मा नाम गुरुः एवं बलोपचयं कृत्वा कदाचिद् मां प्रतिहिंसितुं प्रभवेत्।" इति आशङ्क्य तेन पूर्ण-विश्वास-पात्रे द्वौ स्व-पुरुषौ श्रीगुरुचरणानां व्यापादनाय प्रहितौ। तौ श्रीगुरुचरणान् अनु नाँदेड़ं प्राप्तौ, छलेन च सिक्खानां श्रीगुरुचरणानां च मैत्री-स्नेह-भाजनतां गतौ। एकदा 'रहिरासं' ( सायन्तनीं प्रभु-भक्तिं ) समाप्य श्रीगुरुचरणा यदा स्व-सद्मनि विश्राम्यन्त आसत तदा तयोर् एकः तान्, उपहृदयम्, वामे पार्श्वे छुरिकया प्राहरत्। द्वितीय-वारम् अपि तथा प्रहर्त्तुम् उद्यतं तं श्रीगुरुचरणाः खड्गेन अघ्नन्। तस्य सहचरो विरावम् आकर्ण्य तत्र आगतैः सिक्खैः कृपाणैर् हतः।

इमं वृत्तान्तं श्रुत्वा सम्राजा बहादुरशाहेन श्रीगुरुचरणानां चिकित्सार्थं कुशलाः भिषजः प्रेषिताः। समीचीनया चिकित्सया श्रीगुरुचरणानां व्रणः विरोपितः।

नचिराद् अनन्तरम् एकदा यदा श्रीगुरुचरणा एकं दृढं धनुर् अधिज्यम् कुर्वाणा आसत तदा तेषां व्रणः अस्फुटत्, बहुतरं च असृग् अस्रवत्। सुदुस्सह व्यसनैः निर्वली-कृतं तेषां शरीरं तस्य रक्त-स्रावस्य हेतोः क्शीयो बभूव।

अथ श्रीगुरुचरणाः सिक्खान् आह्वाययन् अवोचंश् च :—"परमात्मन इच्छा सर्वासु अवस्थासु सर्वदा च स-हर्षं शिरसा धार्या। त्रिभुवनस्य स्रष्टा पालयिता च परमेश्वर एव केवलः अनश्वरः। 'सच्चिदानन्द-रूपस्य शश्वद्-अक्षण एव प्रकाशः युष्मासु नित्यं प्रकाशते।' इति जानीत। एतद् ज्ञात्वा सर्वदा प्रमोदत, न जातुचिद् विषीदत। 'खालसा जी' इति मत्यं नाम स्मरत। यूय मया अकाल पुरुषेण योजिता, तस्य रक्षा च्छायां च प्रापिता.। 'ग्रन्थ-साहिबं' (सिक्ख-धर्मग्रन्थ) पठत, शृणुत वा। एव-करणेन यूयं मनसः शान्तिं प्राप्स्यथ।" इति।

आत्मनः अनुयायिभिः सह स्व-सम्बन्धस्य नित्यत्वं मम्पादयिष्यन्तः श्रीगुरुचरणाः ऐहिक्या लीलाया अन्तिमेषु क्षणेषु तत्र उपस्थितान् सिक्खान् अनुवन् :—"निदाङकुर्वन्त यत् 'पवित्र-ग्रन्थ' तः उपदेशस्य ग्रहीतारः, तत्-पथेन च गन्तारः ये पञ्च सिक्खाः क्वचित् मज्जच्छन्ते तेषु अहं वसामि। श्रीगुरुनानक-जीवन-कालाद् आरभ्य सिक्खानाम् इतिहासं पठत। अतः परं खालसा-संस्था 'गुरु', तयोश् च अभेदः, भविष्यति। मया मदीय आत्मा खालसा-शरीरे प्रवेशितोऽस्ति।" इति।

अथ श्रीगुरुचरणाः स्नात्वा वस्त्रा-ऽन्तराणि धृतवन्तः, 'जपजी' (प्रातस्तन-स्तोत्र)-पाठम् 'अर्दासं' (प्रार्थनां) च अन्वतिष्ठन्, धर्मग्रन्थस्य दायभाग् इव तस्य पुरः शिरोऽनमयन्, सिक्खांश् च अशासुः :—"मयि शरीरं परित्यक्तवति एष धर्म-ग्रन्थ एव गुरुर् भविष्यति । अत्र प्रतिपादितम् अर्थम् एव मम पूर्व-गुरूणां च आत्मानं बोधत ।" इति ।

तत आरभ्य 'धर्म-ग्रन्थ' एव गुरुः अस्ति । ख़ालसा-सहितः 'धर्म-ग्रन्थः' एव श्रीगुरुचरणानां रूपम् आत्मानं च व्यनक्ति । 'धर्म-ग्रन्थ'-प्रतिपादितम् अर्थम् अनुसरन्ती सिक्ख-समाजस्य सामष्टिकी इच्छा गुरुवचनवत् प्रमाणत्वेन अङ्गी-क्रियते । यतो हि ख़ालसा-संस्थायाः गौरवम् अखण्डत्वं च सर्वदा गुरुणा एव संरक्ष्यते ।

श्रीगुरुगोविन्दसिंह-भगवत्-पादैः 'वाहे गुरु जी का ख़ालसा; वाहे गुरु जी की फ़तेह ।' (स्वागतम् आश्चर्यभूतस्य भगवतो विशुद्धायै संस्थायै; स्वागतं जयश्रियः स्वामिने आश्चर्यभूताय भगवते ।) इति अभिवादन-वचनेन पश्चिम-वारं तत्र उपस्थिताः सिक्खाः आपृच्छा-रीत्या सत्कृताः । सिक्खाः हि यथा श्रीगुरुचरणेषु अन्वरज्यन् न तथा पदार्था-ऽन्तरे, श्रीगुरुचरणानां छायायां वचनेन च ते महान्ति अवदात-कर्माणि अकुर्वन्; श्रीगुचरणा अपि तेषां कृते सर्व स्व-त्यागम् अपि तृणाय अमन्यन्त । सिक्खैः 'वाहे गुरु जी का ख़ालसा; वाहे गुरु जी की फ़तेह ।' इति वचनेन

प्रत्यभिवादने क्रियमाणे, १७०८ तमे खीष्टाब्दे आक्तोवर-मासि अष्टमे दिवसे ब्राह्मे मुहूर्ते, श्रीगुरुचरणाः, भौतिकं देहम् अमुञ्चन्।

यो दया-परोपकृति-वीरता-ऽऽयुदात्त-वृत्ति-शालिभिः पुरुषैः कर्तुं शस्यानां कर्मणां पद्धतिम्, महत्तमस्य सत्यस्य लोक-मङ्गलकारि-सिद्धान्तानां च रक्षा-हेतोः सुदुस्सह-कष्टमयस्य जीवनस्य सरणिम्, परमेश्वरस्य पन्थानम् इच्छां च, स्व-जीवितं निदर्शनी-कृत्य, लोकान् अदर्शयत्, स महान् धर्मस्य शास्ता, स मानव-जात्याः नव-रूपस्य महान् स्रष्टा, स मूर्धा-ऽभिषिक्तः परमेश्वर-सन्देशहरः, एवं बत, लोकतस् तिरोऽधीयत।

परितः प्रतिसीराभिः परिवृते विविक्ते स्थले चितायां चित्यायां श्रीगुरुचरणानां पावनं शरीरं सम्यग् निधाय 'पवित्र-ग्रन्थ'-वचनानि पठन्तः सिक्खाः तत्र वह्निं प्रवेशयामासुः। अन्ते 'सोहिला' (सिक्ख-धर्मग्रन्थ-स्थल-विशेषः) अपठ्यत, संयाव-'प्रसादः' च व्यतीर्यत।

पश्चापतः दूरेण, नाँदेड़-नगरे, श्रीगुरुचरणैः पुनर् योगम् असम्भवं पश्यतां सिक्खानां जगत् शून्यम् अभात्। श्रीगुरुनानक-भगवत्-पाद-जीवन-कालाद् आरम्य सिक्ख-समाजे, न जातुचित्, श्रीगुरुगोविन्दसिंह-भगवत्-पादानां शरीर त्यागस्य क्षण इव शून्यः कोऽपि क्षणो बभूव। परं ते अस्मरन् यत् श्रीगुरुचरणा आत्मानं खाल्सा-संस्था-ऽभिन्नं कृत्वा सिक्ख-समष्टये गुरु-पदं प्रादुः। इति। अथ श्रीगुरुचरणानां तैः सह तादात्म्य-सम्बन्धस्य अनुभूतिः तेषां

मनःसु धैर्यम् अवध्नात्, तेषां समष्टि-चेतनां च व्याप्नोत्। सैव अनुभूतिः सिक्खानाम् अन्तः करणेषु नित्यं जागर्त्ति; तस्याः एव बलेन च ते मानव-मात्रस्य मङ्गलाय सम्मानाय स्वातन्त्र्याय च, समग्र-मही-मण्डलस्य इतिहासेषु अविस्मरणीयाः, नाना-पीडाः सोढवन्तः, अवदात-तमानि कर्माणि च कृतवन्तः।

---

[ १५ ]

## उपसंहारः

ग्रीस्-देश-वास्तव्यः, आर्यन्-नामा, इतिहास-दर्शन-पण्डित-प्रवरः, पुरा, भारतीयानां चारित्र्यं चित्रयन् उवाच :—

"ते अद्भुत-वीरा एश्या-महाखण्ड-सर्व-राष्ट्र-निवासिषु च श्रेष्ठ-योद्धारो वर्त्तन्ते। तेषाम् आर्जवं व्यवहार-निश्छलत्वं च अद्भुतम्। ते हि तादृश-धर्म-बुद्धयो यद् न जातुचिद् व्यवहारा-ऽभियोगिनो भूत्वा न्याया-ऽधिकरणं गच्छन्ति, तथा मियो-विश्वास-भूयिष्ठा यथा न जातुचित् स्व-गृहाणि ताल-यन्त्रेण निबध्नन्ति, न वा स्व-समयान् लेख्या-ऽर्पितान् कुर्वन्ति। न कोऽपि भारतीयः कदाचिद् मिथ्या वदति।" इति।

अथ काले गच्छति भारतीयानां भाग्य-विपर्ययो जातः। दीर्घ-काल-व्यापि विदेश्य-शासनं तेषां प्राण-बलम् अहार्षीत्, अप्रत्येयां राष्ट्र-हित-हानिं च अकार्षीत्। आर्यन्-नामा यवन-वरो यद् अवोचत् तत् शब्द-ज्ञाना-ऽनुपाति वस्तु-शून्यं दूरा-ऽतीतं किमपि विचित्रम् इव व्यभात्। ततोऽनेक-शत-सम्वत्सरेभ्योऽनन्तरं, पुनः, भारतीयानां तादृशी महती, अंशेन ततोऽपि महीयसी, गुण-प्रशस्तिः श्रोत्र-पथा-ऽतिथिर् भवति।

एतत्-प्रशस्तिकारो भारतीयानां दुर्हृत् खलु, न सुहृद्।

क़ाज़ी-नूरमुहम्मद्-नामा स प्रशस्तिकारः अहमदशाह-दुर्रानी नाम यो विदेश्यो भारत रिपुः सप्तमे भारता-ऽऽक्रमणे ( १७६४-६५ ख्री. ) इह आपपात तस्य सैन्य-बलेन साकम् अत्र आगच्छत्, सिक्खैः सह 'दुर्रानिनः' संवृत्तान् सङ्ग्रामांश् च स्वयम् अपश्यत्। स हि दुर्रानिनो भारता-ऽऽस्कन्दनं पारसीकी-भाषया निबद्धैः पद्यैः अवर्णयत्, तत्र च सिक्खान् बहुशः परुष-पदैः विनिन्दन् अपि तेषां सहजैर् गुणैः वशंवदी-कृतः अकथयत् :—

"मा स्म 'शुनः' ( भारतीय-रिपुभिः प्रयुक्तम् अनादरे सिक्ख-जातिवचनम् ) शुन वोचत। ते सिंहा खलु सन्ति, सङ्ग्रामे च सिंहवत् साहस सन्दर्शयन्ति। य पुङ्गव रणे मृगेन्द्रवद् गर्जति स कथ नु 'श्वा' इति व्यपदेशम् अर्हति ! यदि नाम यूय युद्ध-कौशलम् अर्जितुम् इच्छथ, तदा युद्ध-क्ष्मायां तेषा पुर सन्तिष्ठध्वम्, ते तथा सायुगीनत्व वो दर्शयिष्यन्ति यथा सर्वे एव तान् प्रशसिष्यन्ति। 'सिंह' इति पद तेषाम् उपाख्या वर्त्तते। यूय भारतीय भाषा न अवगच्छथ, (तदा अह वो ब्रवीमि यत्) 'सिंह' इति पद मृगराजस्य अभिधान वर्त्तते। असशय ते विग्रहे सिंह-समा सन्ति सन्धि-शान्ति-काले च (वदान्यतया) 'हातिमम्' अधरी-कुर्वन्ति।

अथ तेषा योधन-विधिं विहाय तेषा गुणा ऽन्तरम् आकर्णयत यत्र ते इतरान् सर्वान् योद्धृ-ज्ञातीन् न्यक्-कुर्वन्ति। ते न जातुचित कापुरुषान् प्रणिघ्नन्ति, न च पलायमानाना पथः निघ्नन्ति। आढ्य-कुलीना वा दासी वा या काऽपि नारी भवेत, ते न जातुचित्

तस्याः धनं वा अलङ्कारान् वा अपहरन्ति। एतेषु 'सखु' पर-दारा-अभिगमनं नाम दोषो न दृश्यते। ते पर-कलत्रेषु व्यवायिनां स्तेनानां च सुहृदः न जायन्ते।...." इति।

जीवातवे मरण-सङ्घर्षे निमग्नैः जनैः ईदृशाम् उदात्त-सिद्धान्तानां परिपालनं तेषाम् असाधारणं चारित्र्यम् मनो-बलं च प्रमाणी-करोति। यः एतद् वर्णनं पठति सः अनुभवति——'अनेक-शत-सम्वत्सरान् जाता राष्ट्र-हानिः अपूर्यत।' इति। किञ्च, एतत् सर्वम् आश्चर्य-भूतं पुना राष्ट्रोत्थानं श्रीगुरु-गोविन्दसिंह-भगवत्-पादानाम् एव अनुग्रहेण संसिद्धम्।

लोक-मनोवृत्ति-विषयकस्य अस्य महा-परिवर्त्तस्य बीजम् आद्यश्रीगुरुचरणानाम् 'सर्वे मानवाः समानं सम्मानम् अर्हन्ति।' इत्येवं-रूपे उपदेशे निहितं बभूव। आद्यश्रीगुरुचरणैः उपक्रान्ता एषा भारतीय-जनता-मानस-पुनर्जन्म-प्रक्रिया दशमनानक-श्रीगुरुगोविन्दसिंह-भगवत्-पादैः पूर्त्तिम् आनीता। पूर्व-गुरुभिः स्व-धर्मोपदेश-बलेन यस्यै भारतीय-जनतायै सामाजिका अधिकाराः पुनः सुलभी-कृताः तस्यां जनतायां दशम-श्रीगुरुचरणाः अध्यात्म-विश्वासस्य अनुभूतिम् अध्यवसाय-त्यागयोश् च गुणौ उद्बोधयामासुः, तस्याः जनतायाः नैसर्गिकीं शक्तीश् च पुनः अर्थ-क्रियाकारिणीः विदधुः। शीर्णः भारतीय-जनसमाज-पटः तैः येन रूपेण नवताम् आपादितः तद्, अथ जनतायाः विचाराणां कर्मणां च स्तरस्य उन्नयन-रूपं यत् कर्म तैः अनुष्ठितं तस्य

मानव-बुद्धया दुरवगाहं स्वरूपं च, विभावयतो विवेकिनो मते श्रीगुरुगोविन्दसिंह-भगवत्-पादाः सर्व-राष्ट्राणाम् इतिहासेषु वर्ण्यमानानां क्रिया-कुशल-मतीनाम् लोकोत्तर-कल्प-कर्मकारिणां पुरुषाणां धुरि कीर्त्तनीयाः सन्ति ।

तैः भारतीय-जनताया अधोगत्याः कारणं तदुद्धरणोपायानां स्वरूपं च यथावत् प्रत्यक्षतया अनुसंहितम् । तदानीन्तन-भारतीय-जनेषु सर्व-सामान्य-बन्धुभावस्य——अन्योन्यैक्यस्य——अभावः प्रथम-मूल-दोषो बभूव । तदा हि भारतीय-समाजः स्पष्टैः इतरेतराभाव-लक्षणैः युक्तेषु, मिथो व्यावर्त्तकेषु, नाना-भागेषु विभक्तः आसीत् । एवं-गते न राष्ट्रं पुनः पुनः अभियोगकारिणां विदेश्या-ऽऽक्रमिणां निरोधाय अलम् अभूत् । यः कोऽपि विदेश्यो विजिगीषुः भारतम् आक्रामत् इहत्यान् लोकान् पराभवत् । यदि क्वचिद् तस्य प्रतिरोधः अभवत्, तदा एकदेश्यः कादाचित्को वा । न तादृशेषु राष्ट्रिय-सङ्कटेषु तदानीन्तन्याः सर्व-जनतायाः हृदयेषु जन्म-भूमि-भक्ति भावस्य उदय सम्भवः आसीत्, न वा सर्व-जन-सङ्घात-समुत्थः वैरि-वारण-प्रयासः सुकरः ।

मुग़ल-शासकेषु पञ्चाशदुत्तर-शत-वर्षाणि भारत-भुवं शासत्सु श्रीगुरुगोविन्दसिंह-भगवत् पादाः श्रीगुरुनानक-भगवत्-पादानाम् अध्यात्म-दायम् अभजन्त । भारते वर्षे मुग़ल-राज्यस्य प्रतिष्ठापकः, मुग़ल शासक-पूर्व-पुरुषः, इह आगमनात् प्राग् गृह-विहीनत्वात् स्थिति-पदम् अन्विष्यन् जनपदात् जनपदान्तरम् अटन् एव

वासरान् अत्यगमयत्, अनतिवृहत्-सैन्येन सहितश् च भारतम् आक्रामत्। अथापि असौ विजयी भूत्वा इह विशालं सुदृढं वलवच्च राज्यं प्रतिष्ठापयितुं प्राभवत्। अथ पुरातनतया स्थिरी-भूतानि सामन्त-राज्यानि आश्रय-स्थितीकृत्य कृत-पदः वैदेश्यः शासना-ऽऽभासः दिने दिने पापीयान्, जनतायाः भूयिष्ठ-सन्त्रासकारी च अजायत। तदा भारतीय-जन-समाजस्य जीवन-रक्षणा-ऽऽश्रयः पुरातनः [धर्मादि-] बल-सञ्चयः एव बभूव; परं अत्याचारिणा शासनेन सह विरोधं दर्शयितुं भारतीय-जनैः न कश्चिद् वास्तविकः समुद्योगः कृतः; न विद्रोहः, न उपद्रवः, न शासन-भङ्गः। निरीहत्वं जनानां हृदयानि व्याप्नोत्; सर्वः केवलस्य आत्मनः मुक्तिम् अकामयत; राजनयिकस्य सामाजिकस्य वा चैतन्यस्य सञ्जनन्यः समवेताः लोक-चेष्टाः असम्भवाः अभूवन्।

पूर्व-गुरूणां सकाशात् क्रमा-ऽऽगतं दायं स्व-कोप-बलं कृत्वा श्रीगुरुगोविन्दसिंह-भगवत्-पादैः भारतीय-जनतायाः अद्भुतं रूप-परिवर्तनं कृतम्, सा च जाड्य-गर्ताद् उद्धृता। तैः शासकानाम् अन्यायित्वम् इतर-धर्मा-ऽसहिष्णुत्वं च विगर्हितम्, इदं द्वयं निर्विषी-कर्तुं च बलवन्ति औपयिकानि विचिन्तितानि। एवं कृत्वा तैः भारतीय-जनतायां जन्म-भूमि-भक्तिः उद्बोधिता। अपि च, तैः सर्व-मनुज-बन्धु भावः स्व-धर्मशासनस्य मुख्य विषयेषु अन्यतमत्वेन अभ्युपगतः, तत्-सम्पादनार्थं च वस्तु-भूताः उपायाः

कृताः। इत्थं तैः तदानीन्तन-समाज-गतं सर्व-विधं वैषम्यम् अपसार्य समाजः नव-प्राण-बलेन आढ्यः कृतः। तैः प्रवर्तिता ख़ालसा-दीक्षा नव-जीवनस्य सञ्चारकं रसायनम् अजायत। इदं नव-जीवनं परिस्फुरन्त्याः सामाजिक्याः अभिनव-चेतनायाः रूपं दधार, अवाप्त-तादृश-नव-जीवनश् च लोकः आत्मानं सर्व-सामान्य-हिताय समर्पयामास। यः कश्चित् ख़ालसा-दीक्षा-ऽमृतम् आचामत्, सर्व-हिते सर्व-स्व-त्यागाय सोत्साहम् उदयुङ्क्त, आत्मानं च एक-समग्र-सेना-बलधरम् अमन्यत। स हि केवला-ऽऽत्म-हित-कामं हृदयस्य अनौदार्यं च, सर्पः कञ्चुकम् इव, अमुञ्चत, बृहत्तरया बन्धुतया सह निजत्व-सम्बन्धं च अलभत। गुरुस् तस्य भक्त्याः अनुरक्त्याश् च केवलः विषयोऽभवत्। अनेक-शत वर्ष-रूढम् ऐकान्तिक-जीवन-पद्धति-विचारम् आत्म-यन्त्रणा-पथं च हित्वा स गुरोश् च सर्व-सामान्य-सम्पद्-भूतायाः ख़ालसा-संस्थायाश् च सर्वात्मना अनन्य-भक्तो बभूव। कृपाण-वाहकता तस्य नव्यो वृत्ति-व्यवसायोऽभवत्। न्यायस्य धर्मस्य च रक्षणाय कृपाण-वाहने स न जातुचिद् अलसत्वं संशयित्वं ह्रीमत्त्वं वा गतः। परम्, कृपाणधारित्वस्य प्रदर्शनाय केवलं स न जातुचित् कृपाणम् अवाहयत्। तदेवम्, अभिनवो जीवन-विषयको राद्धान्तो जन-मनःसु पदं चकार। निर्भयत्वम्, परोपकृति-प्रवणता, परमेश्वरे गुरौ परम कठिनायाम् आचार-संहितायां च विश्वासः तस्य राद्धान्तस्य अङ्गानि बभूवुः।

१७०८ तमे ख्रीष्टाब्दे श्रीगुरुगोविन्दसिंह-भगवत् पादेषु

ब्रह्म-भूयं गतेषु, तैः समुत्थापितायाः अस्याः अभिनवायाः मनोवृत्त्याः बहु-वर्ष-व्यापिनी सुदुस्तरा परीक्षा प्रारब्धा। यतः, समग्रां सिक्ख-जातिं दण्डयितुं स-मूल-घातं हन्तुं च कृत-सङ्कल्पाः शासकाः प्रायशः शतं वर्षाणि सिक्खान् बहुधा भृशम् अपीडयन्। 'सिक्खाः राज-शासन-विधान-बहिर्भूताः।' इति घोषयित्वा शासकैः आदेशः प्रचारितः 'दृष्टि-पथम् अवतरन् एव सिक्खो हन्तव्यः।' इति, 'यः कश्चित् सिक्ख-शिरश् छेत्स्यति पुरस्कारम् अवाप्स्यति।' इति च अघुष्यत। इत्थम्, शासकानां नाशस्य-हेतोर् नगर-ग्राम-वासे अशक्ये जाते सिक्खाः स्व-गृहाणि परित्यज्य वन-गिरि-गुहा-शरणाः बभूवुः। अथ सिक्ख-धर्ममन्दिराणि निषिद्ध-प्रवेशानि, संवृत-द्वाराणि, भूमिसाद् वा, अक्रियन्त। परस्सहस्राणि सिक्खाः कण्ठ-पाशेन व्यापाद्यन्त, कृत्त-विटपवत् क्षिति-तले अकृष्यन्त, व्यशस्यन्त च। अथाऽपि, न तैः पराजयः स्वी-कृतः। तेषाम् आत्मा नव-नव-पीडा-ऽनुभवेन कठोरतां गतः। असामान्य-सहिष्णुता-बलेन तैः कालः यापितः, वीरोचितेन सङ्घर्षेण यन्त्रणा-सहनेन च आचारस्य परमोन्नतं पदं प्राप्तम्। सिक्खेतिहासस्य इदं युगं तैः निरुपम-त्याग-शौर्य-कर्मभिः पूतम्। अस्मिन् युगे सिक्ख-चारित्र्यस्य उदात्ततमं रूपं व्यक्तिं गतम्। भीषणतमेऽपि जीवन-सङ्कटे सिक्खैः न कदाचिदपि स्व-धर्मस्य उच्चमनस्कतोज्ज्वलाः सिद्धान्ताः अवधीरिताः, न च हृदयस्य विशालता उपेक्षिता।

तदा सिक्खाः श्रीगुरुगोविन्दसिंह-भगवत्-पादैः वाढी-कृतानां सिद्धान्तानां सिक्ख-धर्म-गौरवस्य च रक्षा-हेतोः रणे मरणं मनुष्य-

जीवितस्य चरमं फलम् अमन्यन्त, तन्निमित्तं च स हर्षं सोत्साहं च प्रायतन्त। तथैव, ते अन्यायिना सह सन्धिं महा-ऽधः-पतनत्वेन हरिण-हृदयत्वेन च प्रत्यपद्यन्त। अयं नूतनो वीर-मनो-भावः राष्ट्रे महा-परिवर्त्तनकरं विचार-तरङ्गम् अजनयत्, भारतेतिहासं च नव्यं राज-मार्गम् अनयत्। भारतेतिहासस्य नव-मार्ग-ग्रहणस्य साधकं प्रमाणं च एतद् यद् अहमदशाह-दुर्रानिनः पौत्रः, शाहज़मानः, भारतम् आक्रम्य स्व-देशाय प्रतिनिवर्त्तमानः यदा सिक्खैः कदर्थितः मुषितश् च तदा द्रुत-पदं १७९९ तमे ख्रीष्टाब्दे जन्वरि-मासस्य त्रिंशे दिवसे पुरुषपुरं (पेशावरं) प्राप्तः। सिक्ख-शक्त्याः उदयात् पूर्वम् अनेक-शत-सम्वत्सर-कालं यावद् बहवो रिपवः 'पश्चिमोत्तर-मार्गेण' पुनः पुनः भारतम् आक्रामन्, तस्माद् अनन्तरं तु न एकोऽपि।

पारसीक-देश-वास्तव्यः नादिरशाहो नाम भारता ऽऽक्रामकः एकदा लवपुर-क्षत्रपम् अप्राक्षीत् 'के नु एते सिक्खाः सन्ति?' इति। क्षत्रपः प्रत्यब्रवीत् 'ते सम्प्रदाय-विशेषस्य अनुयायिनः साधवः, प्रतिहायनं द्विः स्व-गुरोः सरसि स्नातुम् आयान्ति, स्नात्वा च तिरो-भवन्ति।' इति।

नादिरशाहः पुनः अन्वयुङ्क्त 'ते कुत्र निवसन्ति?' इति। क्षत्रपः प्रत्यभाषत 'तेषां वाजिनः एव तेषां गृहाणि।' इति।

अथ नादिरशाहः क्षत्रपं प्रबोधयन् इव आह स 'अस्तु। भवता अप्रमत्तेन भाव्यम्। तद् वासरं दूरे नास्ति यदा एते जनाः

अस्य देशस्य अधिपतयो भविष्यन्ति।' इति।

नादिरशाहेन अवितथम् अभिहितम्। वन-वसतीः विहाय सिक्खाः शनैः शनैः ग्रामान् नगराणि च प्रत्यागन्तुं देशाऽधिपतित्वं च अर्जितुम् आरभन्त। १७९९ तमे खीष्टाब्दे सेना-महानायकेन राजनीति-परमचतुरेण महाराज-रनजीतसिंहेन लवपुरं स्व-हस्ते कृतम्। परं ततः प्रागेव एकं बलवत् सिक्ख-राज्यं लब्धोदयम् अभूत्।

अस्याम् ऐतिहासिक्यम् आरोह-सोपान-परम्परायां यस्य वस्तुनः विशेषेण अर्थवत्त्वं तद् न स शीर्षस्थः बिन्दुः यः आध्यात्मिक-पुनर्जन्म-प्रक्रिया-परिणामत्वेन उद्गतः। अत्र अर्थवद् वस्तु एतद् यत् सिक्ख-गुरुभिः भविष्यद्-वाणी-रीत्या यद् व्याहृतं तद् अनतिक्रम्य सर्वं जातम्, तेषां वचनस्य प्रामाण्यं प्रत्यक्षतां गतम्, तेषां भविष्यद्-वाण्यां च मनुष्यस्य आत्मनः रूपा-ऽन्तरकारिणी महती शक्तिः बभूव। इति। श्रीगुरुगोविन्दसिंह-भगवत्-पादाः मिथ्यात्व-दोष-मुक्तान् धार्मिक-सिद्धान्तान् जनानां व्यवहारस्य कर्मणां च अवलम्बत्वेन तेषां हस्तेषु निधाय तान् लौकिक-क्रिया-कलापेषु प्रवर्त्तयामासुः। श्रीगुरुचरणानां मतेन तदनुयायिभिः तत्-प्रतिपादिताः विधयः अशेषतया पालनीयाः, न अंशतः। तस्मादेव कारणाद् मनुष्यस्य आचार-व्यवहारयोः उन्नयनम् इव तस्य सुप्त-शक्तीनाम् अपि अभूत-पूर्वम् उन्नयनम् अभूत्। अयं 'प्रयोगः' नवं जीवनोत्साहं नवां च जीवन-मरणिम

अजनयत् । इदम् आचार-व्यवहार-विचार-पुनरुत्थानम् श्रीगुरुगोविन्दसिंह-भगवत्-पाद-प्रवर्तित-ख़ालसा-संस्था-रूपेण अभिव्यक्तिम् अगच्छत् ।

मानवीय-प्रगतौ श्रीगुरुगोविन्दसिंह-भगवत्-पादानां महत्तमः योग एष एव या तत्-प्रतिष्ठापिता ख़ालसा-संस्था । अस्याः प्रतिष्ठापनं ताम् आचारिकीं धार्मिकीं च सद्-भूतां शक्तिम् अजनयत् या मनुष्यं कर्मसु उत्साहयति प्रेरयति च । अस्याः प्रतिष्ठापनेन श्रीगुरुचरणाः आत्म-प्रकृत्योः—सूक्ष्म-स्थूलयोः—संनियोगं निष्पादयामासुः । श्रीगुरुचरणाः लोकानां मनांसि नानावादानाम् अन्ध-विश्वासानां च बन्धनाद् अमोचयन्, तेषां शक्तीश् च तात्त्विकानां प्रयत्नानां निर्भय-वितनने प्रावर्त्तयन् । ते हतोत्साहानां राजनयिक-जगति न्यग्-भूतानां च जनानां प्राणशक्तिम् उद्दीप्य तान् वीर-विस्रब्ध-कर्माणि कर्तुं क्षमान्——नवेतिहास-निर्माण-समर्थान्——अकुर्वन् । स्व-भक्तैः 'कल्ग़ीधर' (मुकुटधर) इत्यनेन, 'बाजाँवाला (श्येन-लाञ्छन) इत्यनेन च, अनुराग-व्यञ्जकेन विशेषण-पदेन सम्बोधिताः ते परमार्थेन साधारणान् जनान् स्वतन्त्र-नृपतेः लाञ्छनयोः, मुकुट-श्येनयोः, दाय-भाजः अकुर्वन् । ते लोकेभ्यः मर्त्य-स्वर्ग-लोकयोः द्वे राज्ये रिक्थत्वेन अमुञ्चन् । तैः उपदिष्टम् :—"यां काञ्चन अवस्थां गताः यूयं भवथ, परमेश्वरे श्रद्धावन्तः भवथ । सा श्रद्धा युष्माकं जीवन-मार्ग-दर्शिका जीवना-ऽवलम्ब-भूता च भवतु । सुखिनो

दुःखिनो वा भवथ, परन्तु परम-पूता-ऽऽचारवन्तो भवथ।" इति। मनुष्यस्य आत्मनः इत्थं रूपान्तरी-करणं श्रीगुरुगोविन्दसिंह-भगवत्-पादानां सर्जन-शील-प्रतिभायाः भृशा-ऽऽश्चर्यमयी उपार्जना आसीत्।

एवं श्रीगुरुगोविन्दसिंह-भगवत्-पादानाम् ऐतिहासिकं महत् कर्म एतद् यत् ते विश्वजनीनानाम् आचार-सम्बन्धिनां च उदात्त-सिद्धान्तानां बीज-संहितां व्यरचयन्, तं समाजं च उदपादयन् यस्य सदस्याः प्राणान् मुक्त्वा अपि ईश्वर-निष्ठायाः, स्वातन्त्र्यस्य, आचारस्य, वीर्यवत्-कर्मणां च सिद्धान्तान् रक्षितुं सर्वदा उद्यताः भवन्ति। इतिहास-सम्बद्धं श्रीगुरुचरणानाम् इमं महिमानं वर्जयित्वा, तेषां प्रतापोज्ज्वला व्यक्तिः अपि सर्व-राष्ट्राणाम् इतिहासेषु तुलां न बिभर्ति। औज्ज्वल्येन, विस्तारेण, बहु-मुखत्वेन च तेषां प्रतिभाम् अतिशयाना प्रतिभा मानवेन ऊहितुं दुःशका। इतिहास-विदां वरस्य सय्यद-मुहम्मद-लतीफ़-महाशयस्य मतेन "गुरुगोविन्दसिंहः धर्म-क्षेत्रे शास्त्रकारः, रण-क्षेत्रे सैन्य-नायकः, गुरु-पीठे महाराजः, ख़ालसा-समाजे च साधुः खलु बभूव।"

अनल्पाः हि श्रीगुरुगोविन्दसिंह-भगवत्-पादानां गुणाः। तथाहि, क्षपितशालिनः ते परमेश्वरोपदिष्टं स्व-जीवन-प्रयोजनं यथावद् अविदुः, जीवलोकेषु च सुतराम् अलिप्यन्। ते महाराजा-ऽधिराजवद् विदुषां सम्भावयितारः आसन्। अथ ते गभीरेण आध्यात्मिक-रहस्येन दिव्य-प्रेरणया च आत्मस्य काव्यस्य

प्रणेतारः, मानवानां नैसर्गिकाः नेतारः, अतुल्य-सैनिक-शक्ति-साहस-शालिनः योद्धारः, समाजस्य उद्धारकाः तारकाश् च, पर-सुख-दुःखा-ऽनुभवन-शील-विशाल-शक्त्या सम्पन्नाः, सिद्ध-जनाश् च बभूवुः। तैः लोकानां पीडाः आर्त्तयश् च मनो-बलेन यथावद् अनुभूताः, तासां निवारणाय च महत्तमः त्यागः कृतः। तैः बाल्ये बाल-स्वभावेन ऋजुतया, परं सोद्देश्यतया, स्व-पितृ-पादान्, श्रीगुरुतेगबहादुर-महाभागान्, प्रति यद् उक्तम् तत् तेषां न्याय-स्वातन्त्र्ययोः सिद्धान्तानां रक्षा-निमित्तं स्व-जीवित-त्यागस्य सङ्कल्पम् अद्रढयत्। इतिहासे विशेषेण अध्येतव्यं यत् कार्यम् आत्मनः जीवनस्य स्वा-ऽनुयायिनां जीवनानां च उद्देश्यतया तैर् निर्धारितं तस्य पूर्त्तये ते चतुरः स्व-तनयान् अन्यच्च अतिप्रभूतं स्वं व्यसृजन्। ते सामाजिक-महा-परिवर्त्तनकारीणि साधनानि उत्पादयामासुः, तेषाम् उत्पादने च, नाटकीय-नायकवत्, प्रचुरान् भाग्य-विपर्ययान् अन्वभवन्। अथापि न जातुचित् तैः स्थित-प्रज्ञत्वं वशित्वं च उज्झितम्। एवं तैः आचारशालिभिः उच्चमनस्कैः सद्भिः अनुसर्त्तुम् उचितस्य कठोर-कर्ममार्गस्य दिक् स्व-व्यवहारेण दर्शिता। सुन्दरं नील-वाजिनम् आरूढाः, वात-विधूयमान-मुकुट-पुच्छेन उपशोभिताः, परिपुष्टेन परम् अस्थूलेन लोकनायकोचितप्रताप-व्यञ्जकेन च वपुषा उपलक्षिताः, नर-वरत्व-द्योतक-तेजोवद्भिः दुष्प्रधर्षैः गुरु-भक्ति-घनैः अश्वारोहि-सिक्खैश् च अनुगम्यमानाः यदा ते आनन्दपुरस्य प्रतोलिकासु परिसरेषु च पर्यक्राम[illegible]

निरुपानत्काः एकाकाः माछीवाड़ा-कान्तारेषु पर्यभ्रमन् तदा अपि तेषाम् आत्मा परमात्म-नाम-स्मृति-च्छाया-लग्नः अतिष्ठत्। ते सम्पदि दया-प्रेमाणौ न अजहुः, विपदि च नैराश्यं न आगच्छन्।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानां प्रतिभाया द्वितीयो महान् गुणः कवित्व-शक्तिः आसीत्। यथा ते परमेश्वरोपदिष्टस्य स्व-जीवित-प्रयोजनस्य पूर्ति-रूपाय सत्य-न्याययोः प्रतिष्ठापनाय तथा तथा प्रायस्यन् तथैव पारमेश्वरिकं सन्देशं लोकानां श्रावयितुं काव्यं साधनतया समाश्रयन्। हन्त! तेषां काव्यस्य भूयिष्ठं तेषां जीवितस्य अशान्ति-बहुले चरमे काले विनष्टम्। तस्य अल्पम् एव अस्मान् प्राप्तम्। ईश्वरा-ऽनुकम्पया यावन्मात्रं तेषां काव्यस्य अवशिष्टं तावदेव तेषां महतीं कवित्व-शक्तिं विशालं काव्य-विषय-क्षेत्रम् अध्यात्म-प्रभाव-गुणं च व्यञ्जयितुम् अलम्। तेषां काव्ये या वर्ण्य-वस्तु-संस्पर्शिता, प्रत्यग्रता, ऊर्जस्वलता च अवलोक्यते सा अन्यत्र दुर्लभा। परमेश्वरस्य परमा पावनता महिमशालिता च यथा अत्र उद्घोषिता न तथा भाषा-ऽन्तर-निबद्धेषु काव्येषु क्वचिदपि। तेषां काव्ये पाठक-हृदयं निगूह्लतां स्फुटानां मनोभिरामाणां पदानां छन्दसां च योजनं विधानं च तथा कौशलेन कृतं यथा तेषां प्रत्यायना-शक्त्या पाठकः रणस्य तुमुलत्वं भटानां संरम्भं खड्गा-ऽऽदीनां शिञ्जितं मिथः सङ्घृष्य-माणेभ्यः खड्गा-ऽऽदिभ्यः निष्पततः स्फुलिंगान् प्रत्यक्षवत् पश्यति शृणोति च। एवं श्रीगुरुगोविन्दसिंह-भगवत्-पादाः भक्ति-वीर-रसयोः अनुगुणान्, वर्ण्य-वस्तु-रूप-विधान-समर्थान्, व्यञ्जना-

प्रधानान्, रूपकोपमा-ऽऽद्यलङ्कारान् असृजन्। तेषां काव्ये या बौद्धिकी विशालता, दृपदीया सारवत्ता, आन्तरिको लयश् च वर्त्ततीति सा तदानीन्तने बुद्बुद-बहुले निष्फल-भावुकता-भूयिष्ठे काव्ये न लभ्यते।

ईश्वरदूत-कवि-सैनिक-दार्शनिक-महाराज-सिद्धपुरुषेत्येतेषां सर्वेषां गुणैः उपेतानाम् अपि श्रीगुरुगोविन्दसिंह-भगवत्-पादानां विशिष्टौ गुणौ लोका-ऽनुग्रहः भूत-दया च आस्ताम्। परमेश्वर-निर्दिष्टं कार्यं साधयद्भिः तैः एतौ द्वौ गुणौ स्व-जीवनं निदर्शनी-कृत्य लोक-शिक्षायै दर्शितौ। एतयोः गुणयोः कारणात् लोकस् तान् स-प्रीति-पुलकं स्मरति। द्वाचत्वारिंशद्-वर्षाणां स्वल्पे काले ते अ-साधारण-साधनानि उत्पाद्य विशिष्टस्य प्रयोजनस्य पूर्त्तये बहु-विधानि कार्याणि सम्पादयामासुः। तेषां ब्रह्म-भूय-प्राप्ति-कालाद् आरभ्य यावदद्य यः कालः अतीतः तदन्तरे ते अस्मद्-धर्म-परम्परायां यत्-किञ्चित् सद् वीर्यवच्च वर्त्तते तस्य वरिष्ठ-प्रवक्तृ-प्रतीकत्वेन गृह्यन्ते। यदा वयम् अ-साधारण-प्राण-बलोपपन्नम्, बहु-वर्ण-प्रभा-विच्छुरितम्, पुङ्खमुकुटधरम्, सु-नेपथ्या-ऽलङ्कृतम्, सिद्धजनोचित-लिङ्गैः उपेतम्, योद्धृ-वेषेण च प्रसाधितम् श्रीगुरुचरणानां रूपम् इतिहासस्य पर्णेभ्यः निःसृत्य अभिमुखी-भवत् पश्यामः तदा महिम्नः नाना-स्मृति-चित्राणि अस्माकं समक्षं परिस्फुरन्ति। स्व-सम्प्रदायस्य उत्पत्त्याः परम्परायाश् च स्मरन्तः सिक्खाः सदा श्रीगुरुचरणानाम् इदं रूपं प्रत्यक्षी-कुर्वन्ति, नित्यं च अस्माद् धर्मं प्रति उत्साहस्य प्रेरणां प्राप्नुवन्ति। इदानीं यावद्

इदं रूपं सिक्खानाम् अन्तःकरणेषु आध्यात्मिक-भाव-तरङ्गम् उल्लासयति, ते च सर्वदा 'गुरोः' आत्मानं स्व-मध्ये सन्निहितं संवेदयन्ते। सिक्खेतिहास-काले अचिर-पूर्व-समापतितस्य सङ्कटस्य समये 'श्वेत-श्येन-लाञ्छनः' गुरुः सिक्खानां तथा साक्षाद् नेता मार्ग-दर्शकं नक्षत्रं च आसीद् यथा इह लोके अवतरण-क्षणाद् आरभ्य काला-ऽन्तरेषु।

श्रीगुरुगोविन्दसिंह-भगवत्-पादैः अनुष्ठितं महत् कर्म एतदेव यत् तैः आद्य-श्रीगुरुचरणैः समारब्धं कार्यं पूर्तिं नीतम्। स्व-जीवन-प्रयोजनं निर्दिशद्भिः तैः विचित्र-नाटके अभ्युक्तम्:—

"यस्य हेतोरहं मर्त्ये लोके जन्म गृहीतवान्।
यूयं सुकृतिनः सर्वे शृणुत तं ब्रवीमि वः॥
उन्नयनं हि धर्मस्य रक्षणं गुणिनां सताम्।
निषूदनं च दुष्टानां मज्जीवन-प्रयोजनम्।" इति।

श्रीगुरुगोविन्दसिंह-भगवत-पादाः शासकान् अनपराद्धानां जनानां प्रपीडनाद् इतर-धर्मा-ऽसहिष्णुत्वाच्च निवारयितुं सङ्कल्प पराः बभूवुः। न ते राज्यं वा भौतिकम् ऐश्वर्यं वा अर्जितुम् अयुध्यन्त; न च तैः कस्यचिद् धर्मस्य सम्प्रदायस्य वा विरोधः कृतः। हिन्दवो माहम्मदीयाश् च उभये तेषाम् अनुयायिनो भक्ताश् च अभूवन्। अनेके धर्म-वृद्धाः माहम्मदीयाः जनाः माहम्मदीयैः एव शासकैः सह श्रीगुरुचरणानां युद्धेषु तेषां सहकृत्वानो बभूवुः। भंगानी-युद्धे तेषां सहयुध्यनः पीर-बुद्धुशाहस्य चत्वारः सुताः बहवोऽनुयायिनश्

च प्राणान् अमुञ्चन् । सरहिन्दे तेषां यवीयसोः तनूजयोः निहननं मालेरकोटला-पतिः शेरमुहम्मदः माहम्मदीय-धर्म-प्रतिकूलम् अघोषयत्, अनिन्दच्च । एवं विभिन्न-धर्मा-ऽनुयायिनो जनाः, 'सर्वे मानवाः तुल्याः, धाम-रूपाणां भेदेऽपि च सत्यस्य स्वरूपं सर्वत्र समानम् ।' इति उपदिशत्सु श्रीगुरुचरणेषु अन्वरज्यन्त ।

श्रीगुरुगोविन्दसिंह-भगवत्-पादानां जीवित-काले सिक्ख-संस्था सिक्ख-राज्यस्य रूपं दधार । परं तादृश-'सिक्ख-राज्य'-वैभवेऽपि श्रीगुरुचरणानां जीवनं, 'प्योरिटन्' (विशुद्धवादिन्) इति नाम्ना प्रसिद्धानां खीष्ट-मता-ऽनुयायिनां जीवनमिव, ऐश्वर्य-दोषा-ऽस्पृष्टं सरलं निर्मलं च अभूत् । श्रीगुरुनानक-भगवत्-पादानाम् उपदेशाः कोमलाः अकटवश् च अभूवन्; परं तेषु अन्यायं प्रति, क्रौर्यं प्रति, दम्भं प्रति च व्यङ्ग्यतया विद्यमानं पारुष्यम् आक्रोशित्वं च चक्षुष्मतां न दुर्दर्शम् । श्रीगुरुगोविन्दसिंह-भगवत्-पादानां जीवित-काले यज्जातं तत् तदानीन्तन्याः देश-काला-ऽवस्थायाः एव स्वाभाविकः प्रसवः आसीत् । ये केचन कोविदाः, पुनः, श्रीगुरुगोविन्दसिंह-भगवत्-पाद-कृतं सैनिक-वीर-भाव-चेतनायाः उद्बोधनं सिक्ख-सम्प्रदाय-संस्थापकैः आद्यश्रीगुरुचरणैः उपदिष्टस्य मार्गस्य प्रतिकूलं मन्वते ते न तत्त्व-वेदिनो भवन्ति । अत्र तत्त्वं तु इदं यत् स्व-पूर्व-गुरुभिः प्रतिपादितानाम्, स्वस्य पितृ-पादैः प्रपितामह-पादैश् च आत्मनो जीवितं दत्त्वा रक्षितानाम्, धर्म-सिद्धान्तानां रक्षा-हेतोः एव श्रीगुरुगोविन्दसिंह-भगवत्-पादाः खड्गम् आश्रयन् । तैः कृतानां युद्धानां मध्यतः एकस्य अपि

कारणं न तेषां चरिते सङ्केतयितुं शक्यम्। युद्धेषु पुनः पुनः विजय-श्रिया वृताः अपि ते न एकम् अपि भू-खण्डम् राज्यतया आत्मसाद् अकुर्वन्। अन्यायिनाम् आततायिनां च शक्त्याः निरोधाय तैः यः रणोद्योगः कृतः स भारतस्य आक्रामकैः मुग़लैः कृतानि प्रजा-पीडन-कर्माणि स्पष्टं विनिन्दताम् आद्य-श्रीगुरुचरणानाम् उपदेशस्य सर्वथा अनुकूलः। सिक्ख-सम्प्रदायस्य आन्तरङ्गिकः यः सिद्धान्तः आद्य-श्रीगुरुचरणैः परिभाषितः, तदनन्तरम् अष्टभिः गुरुभिश् च मण्डितः, स एव चरम-गुरु-श्रीगोविन्दसिंह-भगवत्-पादैः सर्वात्मना निरवशेष-पूर्त्तिं नीतः।

---

# परिष्क्रिया

| पृष्ठे | पङ्क्तौ | परिष्कार्यम् | परिष्कृतम् |
|---|---|---|---|
| [illegible] | ७ | आश्चर्म् | आश्चर्यम् |
| [illegible] | ४६ | सन्दर्भस्य | सन्दर्भस्य |
| २१ | १८ | अवसिते सति | अवसिते |
| २६ | ९ | अङकुरः | अङ्कुरः |
| ३३ | ८ | सीसगंज | रिकाबगंज |
| ३७ | ८ | प्रैषितं | प्रेषितं |
| ४७ | १६ | धारां | धाराम् |
| ५५ | ५ | अभिनवो धर्म-वार्णा | अभिनवा धर्म-वार्णा |
| ५९ | २० | विद्याधर | विद्यासागर |
| ६५ | १६ | उद्गूरयन् | उद्गूरयमाणो |
| ७३ | १ | १७९३ | १६९३ |
| ७४ | २ | तीर्णे सति | तीर्णे |
| ८५ | ११ | तथा सति | तथा कृते |
| ८८ | १३ | माहम्दीय- | माहम्मदीय- |
| ९३ | १६ | नणेभ्य. | चरणेभ्यः |
| ९८ | १२ | रज्जनं | रञ्जनं |
| १०१ | १२ | नूतना | नूतनो |
| १२० | ७ | अवरङ्गवज़ेबं | अवरङ्गज़ेबं |
| १२२ | १० | योधारो | योद्धारो |
| १२६ | १ | समाधिम् | धर्ममन्दिरम् |
| १३१ | २ | योधसिंहः | योद्धसिंहः |
| १४१ | ६ | बिबिडा- | निबिडा- |
| १४३ | १३ | गुलावम् | गुलाबस् |
| १५१ | ४ | भदे | भेद |
| १५५ | ८ | -तिपातेन | -ऽतिपातेन |
| १५९ | २० | पर | परं |
| १७२ | १ | अवरङ्ग़ज़ेबस्य | अवरङ्गज़ेबस्य |
| १७५ | १७ | अवरङ्ग़ज़ेवस्य | अवरङ्गज़ेवस्य |
| १७९ | ६ | मानसिंहस्य | "मानसिंहस्य |
| १९५ | ८ | ऐतिहासिक्यम् | ऐतिहासिक्याम् |

# श्लोका-ऽनुक्रमणिका

## (INDEX TO VERSES)

**विज्ञप्तिः** —प्रतीकानां दक्षिणतः सङ्ख्या-ऽङ्काः पृष्ठ-सङ्ख्या-ऽङ्काः वर्त्तन्ते ।

# मुख्य-तिथि-काल-तालिका

## (TABLE OF THE MAIN DATES)

विज्ञप्तिः —वामतः ख्रीष्ट-वत्सर-सङ्ख्या-ऽङ्काः, दक्षिणतश् च पृष्ठ-सङ्ख्या-ऽङ्काः वर्त्तन्ते ।

| | |
|---|---|
| १४६९–१५३९ श्रीगु० ना० कालः | ४ |
| १६२१–१६७५ श्रीगु० ते० ब० कालः | १२ |
| १६६६ दिस० २६, श्रीगु० गो० सि० जन्म | १३ |
| १६६९ अवरङ्गज़ेवस्य हिन्दुविरोधी आदेशः | २७ |
| १६७५ नव० ११, श्रीगु० ते० ब० बलिदानम् | ३१ |
| १६७६ मार्च २९, श्रीगु० गो० सि० गुरुपीठाभिषेकः | ३६ |
| १६७९ अवरङ्गज़ेवस्य जज़ियाकरादेशः | २७ |
| [१६८६ श्रीगु० गो० सि० प्रथमविवाहः | ५०] |
| १६८६ ग्रीष्मः, श्रीगु० गो० सि० नाहनगमनम् | ५२ |
| [१६८७ श्रीगु० गो० सि० द्वि० विवाहः | ५०] |
| १६८८ सेप्त० २२, भंगानीयुद्धम् | ६८ |
| १६८९ अ० सि० जन्म | ५१ |
| १६९० जु० सि० जन्म | ५१ |
| १६९३ नव०, अवरङ्गज़ेवस्य गुरुगृहनाशादेशः | ७३ |
| १६९६ ज़ो० ब० सि० जन्म | ५१ |
| १६९९ फ़० सि० जन्म | ५१ |
| १६९९ मार्च ३०, ख़ालसाप्रतिष्ठापनम् | ७९ |
| १७०१ श्रीगु० गो० सि० द्वि० पत्नीस्वर्गवासः | ५० |
| १७०१ श्रीगु० गो० सि० तृतीयभार्याग्रहणम् | ५० |
| १७०४ शरद्, आ० पु० त्यागः | १२५ |
| १७०४ दिस० २२, चमकौरे वीरगतिप्राप्तिः | १३० |
| १७०४ दिस० २७, सरहिन्दे बलिदानम् | १३९ |
| १७०६ आक्तो० श्रीगु० गो० सि० दक्षिणापथप्रस्थानम् | १०३ |
| १७०७ फ़ेब्० २०, अवरङ्गज़ेबनिधनम् | १०८ |
| १७०८ आक्तो० ७, श्रीगु० गो० सि० ब्रह्मभूयप्राप्तिः | १८५ |
| १७१५ बन्दासिंहबलिदानम् | १८१ |

---

# श्लोका-ऽनुक्रमणिका

## (INDEX TO VERSES)

**विज्ञप्तिः**—प्रतीकाना दक्षिणत सङ्ख्या-ऽङ्का पृष्ठ-सङ्ख्या-ऽङ्का वर्त्तन्ते ।



---